प्रयत्नवदात्मसंयोगासमवायिकारणकक्रिया चेष्टा।

## (८८)[२.३ इन्द्रियलक्षणम्]

शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम्[१], स्मृत्यजनकज्ञानकारण-मनःसंयोगाश्रयत्वं वेन्द्रियम्।

## (८९)[इन्द्रियभेदाः]

तच्च घ्राणरसनत्वक्चक्षुःश्र[व]णमनोभेदेन षड्विधम्।

## (९०)[घ्राणेन्द्रियलक्षणम्]

गन्धग्राहकं पार्थिवम् इन्द्रियं घ्राणम्।

## (९१)[रसनेन्द्रियलक्षणम्]

रसग्राहकम् आप्यम् इन्द्रियं रसनम्।

## (९२)[चक्षुरिन्द्रियलक्षणम्]

रूपग्राहकं तेजसम् इन्द्रियं चक्षुः।

## (९३)[त्वगिन्द्रियलक्षणम्]

स्पर्शग्राहकं वायवीयम् इन्द्रियं त्वक्।

## (९४)[श्रवणेन्द्रियलक्षणम्]

अदृष्टविशेषोपगृहीतकर्णशष्कुल्यवच्छिन्नं नभः श्रवणम्।

## (९५)[२.४ अर्थनिरूपणम्]

## (९६)[पदार्थलक्षणम्]

अर्थः पदार्थः। प्रमितिविषयः पदार्थः।

## (९७)[पदार्थभेदाः]

स द्विविधो भावोऽभावः च।

## (९८)[भावत्वलक्षणम्]

समवायैकार्थसमवायान्यतरसम्बन्धेन सत्तावत्त्वं भावत्वम्।

---

१ विषयप्रयोगध्यासे.. .. .. यमनःसंयोगाश्रयेति। चक्षुरादिनापि गन्धोऽस्य विद्यते इति ज्ञायते।

भावः च द्रव्यगुणकर्मसामान्यविशेषसमवायभेदेन षड्विध एवाचार्यैरुद्दिष्टः।

**(९९)[उद्देशलक्षणम्]**

नाम्ना सङ्कीर्तनमात्रम् उद्देशः।

**(१००)[द्रव्यभेदाः]**

तत्र पृथिव्यप्तेजोवाय्वाकाशकालदिगात्म[मनो]भेदेन नवधा द्रव्यम्।

**(१०१)[गुणभेदाः]**

रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेष-प्रयत्नगुरुत्व-द्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाः चतुर्विंशतिर्गुणाः।

**(१०२)[कर्मभेदाः]**

उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदात् पञ्चविधं कर्म।

**(१०३)[सामान्यभेदाः]**

सामान्यं त्रिविधम्। परम् अपरं परापरं च।

**(१०४)[विशेषभेदाः]**

अनन्ता विशेषाः।

**(१०५)[समवायः]**

समवायस्त्वेक एव।

**(१०६)[अभावभेदाः]**

अभावो द्विधा संसर्गाभावोऽन्योन्याभावः च।

**(१०७)[षण्णां पदार्थानां साधर्म्यनिरूपणम्]**

षण्णां पदार्थानां साधर्म्यम् अस्तित्वाभिधेयत्वज्ञेयत्वानि।

**(१०८)[अस्तित्वलक्षणम्]**

विधिसुखप्रत्ययवेद्यत्वम् अस्तित्वम्।

**(१०९)[अभिधेयत्वलक्षणम्]**

अभिधानप्रतिपाद्यताभिधेयत्वं शब्दसङ्गत्युपाधिजो धर्मः।

### (११०)[ज्ञेयत्वलक्षणम्]

ज्ञाप्यज्ञापकसम्बन्धोपाधिज्ञानयोग्यत्वं ज्ञेयत्वम्।

आश्रितत्वम् अन्यत्र नित्यद्रव्येभ्यः।

### (१११)[आश्रितत्वलक्षणम्]

आश्रितत्वं स्वाभाविक्याधारसन्निकृष्टता समवायादिसम्बन्धेन वृत्तिमत्त्वं वा।

मूर्तं विहाय निष्क्रियत्वम्। कर्मसमवायिकारणतावच्छेदकतया मूर्तत्वं जातिरेवेति नव्याः।

### (११२)[मूर्तत्वलक्षणम्]

इयत्तावच्छिन्नपरिमाणवत्त्वम् उपाधिरेवेति प्राञ्चः।

समवायं विहायानेकत्वं समवायित्वं च।

### (११३)[अनेकत्वलक्षणम्]

अनेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वम् अनेकत्वम्।

### (११४)[समवायित्वलक्षणम्]

समवायसम्बन्धेन सम्बन्धित्वं समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं वा समवायित्वम्।[४अ]

### (११५)[गुणादिपञ्चानां पदार्थानां साधर्म्यनिरूपणम्]

गुणादीनां पञ्चानां निर्गुणत्वनिष्क्रियत्वे।

### (११६)[निर्गुणत्वलक्षणम्]

गुणवदवृत्तिपदार्थविभाजकोपाधिमत्त्वं निर्गुणत्वम्।

### (११७)[निष्क्रियत्वलक्षणम्]

कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वं कर्मवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिशून्यभावत्वं वा निष्क्रियत्वम्।

### (११८)[द्रव्यादित्रयाणां पदार्थानां साधर्म्यनिरूपणम्]

द्रव्यादीनां त्रयाणां धर्माधर्मकर्तृत्वम्।

### (११९)[धर्मकर्तृत्वलक्षणम्]

अधर्मान्यत्वे सति धर्मजनकवृत्तिपदार्थविभाजकोपाधिमत्त्वं धर्मकर्तृत्वम्।

## (१२०)[अधर्मकर्तृत्वलक्षणम्]

धर्मान्यत्वे सत्यधर्मजनकवृत्तिपदार्थविभाजकोपाधिमत्त्वम् अधर्मकर्तृत्वम्।

कार्यत्वानित्यत्वे कारणवतामेव।

## (१२१)[कार्यत्वलक्षणम्]

कारणाधीनः स्वात्मलाभः कार्यत्वमिति केचित्।

अभूत्वा भावित्वमित्यपरे।

प्राक्प्रध्वंसाभावोपलक्षिता वस्तुनः सत्तैवानित्यत्वमिति केचित्।

उत्पत्तिविनाशयोग इत्यन्ये।

विनाशावच्छिन्नस्वरूपत्वमितीतरे।

## (१२२)[सामान्यादिचतुर्णां पदार्थानां साधर्म्यनिरूपणम्]

सामान्यादीनाम् अनादित्वम् अनन्तत्वं च।

## (१२३)[अनादित्वलक्षणम्]

आदिमदवृत्तिपदार्थविभाजकोपाधिमत्त्वम् अनादित्वम्।

## (१२४)[अनन्तत्वलक्षणम्]

अनित्यावृत्तिपदार्थविभाजकोपाधिमत्त्वम् अनन्तत्वम्।

तथा नित्यत्वम्।

## (१२५)[नित्यत्वलक्षणम्]

नित्यत्वं विनाशरहितत्वं नित्यवृत्तिविभक्तोपाधिमत्त्वं वा।

अन्त्यविशेषान् विहायानित्यधर्मत्वम्। नित्यधर्ममात्रावृत्तिविभक्तोपाधिमत्त्वम् अनित्यधर्मत्वम्।

## (१२६)[द्रव्यादिचतुर्णां पदार्थानां साधर्म्यनिरूपणम्]

द्रव्यादीनां चतुर्णामेवायोगिप्रत्यक्षत्वम्।

## (१२७)[अयोगिप्रत्यक्षत्वलक्षणम्]

[अयोगिप्रत्यक्षत्वम्] अयोगिप्रत्यक्षवृत्तिविभक्तोपाधिमत्त्वम्।

तथासमवेतत्वम्।

### (१२८)[असमवेतत्वलक्षणम्]

समवायवृत्त्यानाधेयत्वम् असमवेतत्वम्।

### (१२९)[गुणकर्मणोः साधर्म्यनिरूपणम्]

असमवायिकारणत्वं गुणकर्मणोरेव।

### (१३०)[असमवायिकारणलक्षणम्]

समवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वम् असमवायिकारणत्वम्।

### (१३१)[पृथिव्यप्तेजोमनसां साधर्म्यनिरूपणम्]

पृथिव्यप्तेजोमनसां परत्वापरत्ववत्त्वं मूर्तत्वं क्रियावत्त्वं वेगवत्त्वं साधर्म्यम्।

### (१३२)[परत्वापरत्ववत्त्वलक्षणम्]

परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं परत्वापरत्ववत्त्वम्।

### (१३३)[मूर्तत्वलक्षणम्]

मूर्तत्वम् अपकृष्टपरिमाणवत्त्वम्।

### (१३४)[कर्मवत्त्वलक्षणम्]

कर्मवत्त्वं कर्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम्।

### (१३५)[वेगवत्त्वलक्षणम्]

वेगवत्त्वं वेगवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम्।

### (१३६)[कालाकाशदिगात्मनां साधर्म्यनिरूपणम्]

कालाकाशदिगात्मनां सर्वगतत्वं परममहत्त्वं च।

### (१३७)[सर्वगतत्वलक्षणम्]

सर्वगतत्वं सर्वमूर्तसंयोगित्वम्।

### (१३८)[परममहत्त्वलक्षणम्]

परममहत्त्वं जातिविशेषोऽपकर्षानाश्रयपरिमाणवत्त्वं वा।

### (१३९)[पृथिव्यप्तेजोवाय्वाकाशानां साधर्म्यनिरूपणम्]

पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वम्।

### (१४०)[भूतत्वलक्षणम्]

बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्, संस्कारत्वान्यबहिरिन्द्रियग्राह्यगुणत्वव्याप्यजातिमद्विशेषगुणवत्त्वं वात्मावृत्तिविशेषगुणवत्त्वं वा भूतत्वम्।

### (१४१)[पृथिव्यादिचतुर्णां साधर्म्यनिरूपणम्]

चतुर्णां पृथिव्यादीनां द्रव्यसमवायिकारणत्वावान्तराणुत्वमहत्त्वशरीरारम्भकत्वानि। [४ब]

### (१४२)[द्रव्यसमवायिकारणत्वलक्षणम्]

द्रव्यसमवायिकारणवृत्तिद्रव्यविभाजकोपाधिमत्त्वं द्रव्यसमवायिकारणत्वं द्रव्यसमवायिकारणवृत्ति-द्रव्यत्वव्याप्यजातिमत्त्वं वा।

### (१४३)[अवान्तराणुत्वलक्षणम्]

जन्याणुत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमवान्तराणुत्वम्।

### (१४४)[अवान्तरमहत्त्वलक्षणम्]

जन्यमहत्त्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमवान्तरमहत्त्वम्।

### (१४५)[शरीरारम्भकत्वलक्षणम्]

शरीरारम्भकवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं शरीरारम्भकत्वम्।

### (१४६)[पृथिव्यादित्रयाणां साधर्म्यनिरूपणम्]

पृथिव्यादीनां त्रयाणां प्रत्यक्षविषयत्वबाह्येन्द्रियग्राह्यत्वद्रवत्वानि।

### (१४७)[बाह्येन्द्रियग्राह्यत्वलक्षणम्]

बाह्येन्द्रियप्रत्यक्षवृत्तिद्रव्यत्वापरजातिमत्त्वं बाह्येन्द्रियग्राह्यत्वम्।

### (१४८)[प्रत्यक्षविषयत्वलक्षणम्]

चाक्षुषप्रत्यक्षविषयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं प्रत्यक्षविषयत्वम्।

### (१४९)[द्रवत्वलक्षणम्]

द्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं द्रवत्वम्।

### (१५०)[पृथिव्युदकयोः साधर्म्यनिरूपणम्]

पृथिव्युदकयोः पतनगुरुत्व...[वत्त्वम्?] आलोकप्रकाश्यत्वम्।

### (१५१)[पतनगुरुत्वलक्षणम्]

गुरुत्वप्रयोज्यपतनत्वव्याप्यजातिमत्त्वम् [पतनगुरुत्वम्?]।

### (१५२)[आलोकप्रकाश्यत्वलक्षणम्]

आलोकान्यत्वे सति तज्जन्यप्रत्यक्षविषयद्रव्यवृत्तिद्रव्यत्वापरजातिमत्त्वमालोकप्रकाश्यत्वम्।

### (१५३)[भूतात्मनां साधर्म्यनिरूपणम्]

भूतात्मनां विशेषगुणवत्त्वं प्रत्यक्षगुणवत्त्वं च।

### (१५४)[विशेषगुणत्वलक्षणम्]

स्वाश्रयव्यवच्छेदोचितावान्तरसामान्यविशेषवत्त्वं विशेषगुणत्वम्। गुणत्वापरजातिमत्तया नियतैकद्रव्यव्यवच्छेदकत्वं तदित्यपरे। तद्वत्त्वं विशेषगुणवत्त्वम्।

### (१५५)[प्रत्यक्षगुणवत्त्वलक्षणम्]

प्रत्यक्षगुणवत्त्वं च प्रत्यक्षगुणवद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वम्।

### (१५६)[आकाशात्मनां साधर्म्यनिरूपणम्]

आकाशात्मनामव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वम्।

### (१५७)[क्षणिकत्वलक्षणम्]

तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वं क्षणिकत्वम्।

### (१५८)[तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वलक्षणम्]

तत्त्वं च चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वम्।

### (१५९)[पृथिवीतेजसोः साधर्म्यनिरूपणम्]

क्षितितेजसोर्नैमित्तिकद्रव्यत्वयोगः।

नैमित्तिकद्रवत्वसमानाधिकरणद्रव(व्य)त्वव्याप्यजातिमत्त्वम्, तेजःसंयोगासमवायिकारणकद्रवत्ववद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं च।

## (१६०)[द्रव्यादीनां लक्षणानि]

अथ द्रव्यादीनां लक्षणमुच्यते।

## (१६१)[लक्षणस्य लक्षणम्]

असाधारणधर्मवचनं लक्षणम्। लक्ष्यतावच्छेदकसमनियतत्वमसाधारणत्वम्।

## (१६२)[द्रव्यलक्षणम्]

द्रव्यत्वजातिमद् गुणाश्रयो वा द्रव्यम्, गुणात्यन्ताभावानधिकरणत्वं द्रव्यत्वम्, गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वं वा।

## (१६३)[पृथिवीलक्षणम्]

पृथिवीत्वजातिमती गन्धवती वा पृथिवी।

गन्ध[१]समानाधिकरणजलाद्यवृत्तिजातिमत्त्वं गन्धवत्त्वम्।

## (१६४)[पृथिवीभेदाः]

सा च पृथिवी द्विधा नित्यानित्या च।

परमाणुरूपा नित्या[२] कार्यरूपा त्वनित्या।

## (१६५)[परमाणुलक्षणम्]

कार्यद्रव्याजन्यं मूर्तं (?) च परमाणुः नित्यः क्रियावान् परमाणु[३]रिति वा[४]।

## (१६६)[द्व्यणुकलक्षणम्]

नित्यद्रव्यजन्यम् अणु च द्व्यणुकम्, स्पर्शवन्नित्यसमवेतं[५] द्व्यणु[५अ]कमिति वा।

कार्यरूपा त्रिविधा शरीरेन्द्रियविषयभेदात्।

गन्धवच्छरीरं पार्थिवं शरीरम्।

---

१ गन्धसमानाधिकरणद्रव्यत्वापरजातिमत्त्वं वा।

२ प्रागभावप्रध्वंसाभावाप्रतियोगित्वं नित्यत्वम्।

३ द्व्यणुकादिद्व्यवच्छेदः।

४ क्रियावान्परमाणुरिति आकाशादिव्युदासाय।

५ परमाणुनिरासाय स्पर्शवदिति। द्व्यणुकादिनिरासाय नित्यसमवेतेति।

### (१६७)[विषयलक्षणम्]

शरीरेन्द्रियव्यतिरिक्तम् आत्मोपभोगसाधनं द्रव्यं[१] विषय[२] इति केचित्।

विषयतासम्बन्धेन साक्षात्कारवत्त्वं विषयत्वमित्यपरे।

गन्धवान् विषयः पार्थिवविषयः।

### (१६८)[जललक्षणम्]

स्नेहवद्वा अप्त्वजातिमद्वा शीतस्पर्शवद्वा सांसिद्धिकद्रवत्ववद्वापाकजाभास्वररूपवद्वा तारतम्यरहितमधुररसवद्वोदकम्।

### (१६९)[जलभेदाः]

तदपि पूर्ववन्नित्यानित्यभेदेन द्विविधम्।

अनित्यं तु शरीरेन्द्रियविषयभेदात् त्रिविधम्। स्नेहवच्छरीरम् आप्यं शरीरम्। स्नेहवद्विषया आप्या हिमादिरूपाः।

### (१७०)[तेजोलक्षणम्]

उष्णस्पर्शवद् भास्वररूपवद्वा तेजस्त्ववद्वा तेजः।

### (१७१)[तेजोभेदाः]

तदपि शरीरेन्द्रियविषयभेदात् त्रिधा। उष्णस्पर्शवच्छरीरं तैजसम्।

### (१७२)[तेजोविषयाः]

तद्वद्विषयाः तैजसाः। विषयसञ्ज्ञकं च तेजः चतुर्विधं भौमदिव्यौदार्याकरजभेदात्।

पार्थिवमात्रेन्धनं तेजो भौमम्।

### (१७३)[भौमत्वलक्षणम्]

अबिन्धनव्यावृत्या काष्ठेन्धनाग्निवृत्तिजातिविशेषो भौमत्वम्।

दिव्यम् अबिन्धनम्। भुक्ताहाररसादिपरिणामनिमित्तम् औदर्यम्। खनिजम् आकरजम्।

### (१७४)[वायुलक्षणम्]

वायुत्ववान् नीरूपस्पर्शवान् वा वायुः। स च नित्योऽनित्यश्च। अनित्यस्तु शरीरेन्द्रियविषयप्राणभेदाच्चतुर्धा।

---

१ गुणादिनिरासाय।

२ प्रतीय[मान]तया भोगसाधनं विषय इति वा।

स्पर्शवच्छरीरं वायवीयम्। विषयो वृक्षादिकम्पजनकः।

### (१७५)[प्राणवायुभेदाः]

प्राणः त्वन्तः शरीरे रसमलरुधिरादिधारणप्रेरणहेतुरेक एव {व}सन् पञ्चधा भिद्यते।

मुखनासिकाभ्यां निष्क्रमणात् प्राणः। मूत्रपुरीषयोरधोनयनाद् अपानः। रसस्य गर्भनाडीवितननाद् व्यानः। अन्नपानादेरूर्ध्वं नयनाद् उदानः। आहारस्य पाकार्थम् औदर्यस्य वह्नेः सम(मं) सर्वत्र नयनात् समानः।

### (१७६)[आकाशलक्षणम्]

शब्दाश्रय आकाशः।

### (१७७)[काललक्षणम्]

कालादिकपरत्वापरत्वानुमेयः कालः।

### (१७८)[दिग्लक्षणम्]

दैशिकपरत्वापरत्वासाधारणकारणं दिक्।

### (१७९)[दिग्भेदाः]

सा चोपाधिवशाद् दशधा भिद्यते।

यदपेक्षया सूर्योदयाचलसंयोगसन्निहिता या दिक् सा तदपेक्षया प्राची व्यवहर्तव्या।

उदयाचलाभिमुखस्य पुंसो दक्षिणभागावच्छिन्ना दिग् दक्षिणा। वामभागावच्छिन्ना दिग् उत्तरा।

उत्क्षेपणजन्यसंयोगाश्रयो(या) दिग् ऊर्ध्वा। अपक्षेपणसंयोगाश्रयो(या) दिग् अधः।

### (१८०)[आत्मलक्षणम्]

आत्मत्वसामान्यवान् ज्ञानाश्रयो वात्मा।[५ब]

### (१८१)[आत्मभेदाः]

स च द्विविधो जीवेश्वरभेदात्।

### (१८२)[जीवात्मलक्षणम्]

सुखाद्याश्रयाहम्प्रत्ययवेद्यो जीवः।

### (१८३)[ईश्वरलक्षणम्]

दुःखासमानाधिकरणज्ञानवान् नित्यज्ञानाश्रयो वेश्वरः।

### (१८४)[मनोलक्षणम्]

आत्मतद्गुणादिप्रत्यक्षकारणं मनः। स्पर्शरहितत्वे सति क्रियावत्त्वं वा मनसो लक्षणम्।

### (१८५)[गुणलक्षणम्]

कर्मद्रव्यभिन्नत्वे सति जातिमत्त्वं गुणत्वम्। सामान्यवान् संयोगविभागहेतुजातीयेतरो गुण इति वा।

### (१८६)[रूपलक्षणम्]

चक्षुर्मात्रग्राह्यजातिमद्गु[१]णत्वं[२] रूपत्वम्।

### (१८७)[रसलक्षणम्]

रसनेन्द्रियमात्र[३]ग्राह्यजातिमान् रसः।

### (१८८)[गन्धलक्षणम्]

घ्राणेन्द्रियमात्रग्राह्यजातिमान् गन्धः।

### (१८९)[स्पर्शलक्षणम्]

त्वगिन्द्रियमात्रग्राह्यजातिमान् स्पर्शः।

तत्र शुक्लभास्वरं रूपं तेजसि।

### (१९०)[भास्वरत्वलक्षणम्]

परप्रकाशत्वावच्छेदकजातिविशेषो भास्वरत्वम्, तद्वद्भास्वरम्।

### (१९१)[उद्भूतानुद्भूतत्वनिरूपणम्]

एते रूपरसगन्धस्पर्शा उद्भूतानुद्भूतभेदाद् द्विधा।

उद्भूतत्वं जातिः तदभावोऽनुद्भूतत्वमिति प्राञ्चः।

अनुद्भूतत्वं जातिः तदभाव उद्भूतत्वमिति नव्याः।

उद्भूतत्वं प्रत्यक्षप्रयोजको धर्मः तदभावोऽनुद्भूतत्वमिति च केचित्।

### (१९२)[सङ्ख्यालक्षणम्]

सङ्ख्यात्वजातिमत्येकादिप्रत्ययस्य तद्व्यवहारस्य चासाधारणकारणं वा सङ्ख्या।

---

१ **मद्रूपम्** इति संशोधितम्।

२ सङ्ख्यादावतिव्याप्तिवारणाय मात्रपदम्।

३ संयोगादिनिवारणाय मात्रपदम्।

### (१९३)[सङ्ख्याभेदाः]

सा च द्विविधा। एकद्रव्यानेकद्रव्या च। एकत्वजातिमत्येकसङ्ख्यैकद्रव्या।
द्वित्वादिकापरार्धा[1]न्ता द्वित्वादिजातिमत्यनेकद्रव्या।

### (१९४)[परिमाणलक्षणम्]

परिमाणत्ववत् मानव्यवहारासाधारणकारणं परिमाणम्।

### (१९५)[पृथक्त्वलक्षणम्]

पृथक्त्वजातिमत् पृथग्व्यवहारासाधारणकारणं वा पृथक्त्वम्।

### (१९६)[पृथक्त्वभेदाः]

तद्द्विविधम् एकद्रव्यम् अनेकद्रव्यं च। आद्यम् एकपृथक्त्वम्। द्विपृथक्त्वादि चेतरत्। एकत्वादिना समानाश्रयं पृथक्त्वम् एकपृथक्त्वम्। द्वित्वादिना समानाश्रयं पृथक्त्वं द्विपृथक्त्वादि।

### (१९७)[संयोगलक्षणम्]

संयुक्तावित्यनुभवसिद्धजातिमान् संयुक्तप्रत्ययस्यासाधारणकारणं वा संयोगः।

### (१९८)[अव्याप्यवृत्तित्वलक्षणम्]

स चाव्याप्यवृत्तिः। स्वात्यन्ताभावसमानाधिकरणत्वम् अव्याप्यवृत्तित्वम्।

### (१९९)[विभागलक्षणम्]

विभक्ताविति प्रतीतिसिद्धविभागत्वजातिमान् विभक्तप्रत्ययासाधारणकारणं वा संयोगनाशको गुणो वा विभागः।

### (२००)[परत्वलक्षणम्]

परत्वजातिमत् परव्यवहारासाधारणकारणं वा परत्वम्।
अपरत्वजातिमद् अपरव्यवहारासाधारणकारणं वा अपरत्वम्[2]।[६अ]

### (२०१)[परत्वभेदाः]

तद्द्विविधं कालिकं दैशिकं च। आद्यं जन्यद्रव्य एव। द्वितीयं मूर्त एव।

---

१ यस्मिन्नियत्ताव्यवहारः समाप्यते स परार्धः।

२ नोदनाभिघातौ संयोगविशेषावेव। प्रेरकप्रेर्ययोर्येन संयोगविशेषेणाविभागेन कर्मकारणत्वं [स सं]योगो नोदनम्। यत्र प्रेर्यप्रेरकयोः संयोगानन्तरमेव विभागो जायते स संयोगविशेषोऽभिघातः।

## (२०२)[मूर्तत्वलक्षणम्]

इयत्तावच्छिन्नपरिमाणं मूर्तत्वं तदाश्रयो मूर्तम्।

ज्येष्ठे कालकृतं परत्वम्, कनिष्ठे कालकृतम् अपरत्वम्।

दूरस्थे दिक्कृतं परत्वम्, समीपस्थे दिक्कृतम् अपरत्वम्।

## (२०३)[गुरुत्वलक्षणम्]

गुरुत्वजातिमद् आद्यपतनासमवायिकारणं वा गुरुत्वम्।

अतीन्द्रियं पतनानुमेयं तदित्युदयनाचार्याः।

अधोदेशावच्छेदेन प्रत्यक्षमेव तदिति लीलावतीकारः।

## (२०४)[द्रवत्वलक्षणम्]

द्रव्यत्वजातिमद् आद्यस्यन्दनासमवायिकारणं वा द्रवत्वम्।

## (२०५)[द्रवत्वभेदाः]

तद्द्विविधं सांसिद्धिकं नैमित्तिकं च। तेजःसंयोगजन्यं नैमित्तिकम्। तद्भिन्नं सांसिद्धिकम्।

## (२०६)[स्नेहलक्षणम्]

सङ्ग्रहरूपकार्यानुमेयो गुणः स्नेहः।

## (२०७)[बुद्धिलक्षणम्]

जानामीतिव्यवसायगम्यबुद्धित्वजातिमती बुद्धिः।

## (२०८)[बुद्धिभेदाः]

सेयं बुद्धिर्द्विविधा। मिथ्या प्रमा च।

## (२०९)[मिथ्याबुद्धिलक्षणम्]

असद्विषयिणी मिथ्येति वाचस्पतिमिश्राः।

विशेष्यासम्बन्धविशेषणविषयकत्वं मिथ्यात्वमिति आचार्यादयः।

## (२१०)[मिथ्याबुद्धिभेदाः]

सा त्रिविधा संशयविपर्ययतर्कभेदात्। संशयः तु वक्ष्यमाणलक्षणः।

### (२११)[विपर्ययलक्षणम्]

प्रतियोगिव्यधिकरणतदभाववति तत्प्रकारको निर्णयो विपर्ययः।

अयथार्थनिश्चयात्मकं जाग्रज्ज्ञानं विपर्यय इति केचित्।

### (२१२)[जागरणलक्षणम्]

स्वप्नवहनाड्यसंयुक्तमनःसंयोगजन्यं ज्ञानं जागरणम्।

### (२१३)[तर्कलक्षणम्]

व्याप्यारोपप्रयुक्तो व्यापा(प)[का]रोपः तर्कः।

### (२१४)[स्वप्नलक्षणम्]

स्वप्नः तु संशयविपर्ययात्मकस्मरणमेव दोषवशात् तदिति स्थाने इदमिति ग्रहणादिति नैयायिकाः।

वैशेषिकाः तु तर्कस्याहार्यविपर्ययत्वान्न पृथग्गणयन्तः संशयविपर्ययस्वप्नानध्यवसायभेदेनाविद्या चतुर्धा इत्याहुः।

{निद्रा} मनःसंयोगजन्यं ज्ञानं {स्वप्नः} निद्रा, दुष्टमनोजन्यं ज्ञानं स्वप्न इत्यन्ये।

### (२१५)[प्रमालक्षणम्]

प्रमा च यथार्थानुभवः।

अबाधितार्थविषयकं ज्ञानं यथार्थम्। तत्त्वं च स्वविषयसम्बन्धेन विशेषणविशेष्यविषयकत्वम्।

सा च प्रत्यक्षात्मिकैवेति चार्वाकाः। अनुमितिरपीति काणादाः। उपमितिरपीति न्यायैकदेशिनः। शब्दोऽपीति नैयायिकाः। अर्थापत्तिरपीति प्राभाकराः। अनुपलब्धिरपीति भाट्टाः। सम्भवैतिह्यरूपापीति पौराणि[६ब]काः।

भक्तिश्रद्धादयोऽपि बुद्धिभेदाः।

### (२१६)[भक्तिलक्षणम्]

आराध्यत्वेन ज्ञानं भक्तिः।

### (२१७)[श्रद्धालक्षणम्]

वेदबोधितफलावश्यम्भावनिर्णयः श्रद्धा।

### (२१८)[सुखलक्षणम्]

{स} सुख्यहमित्यनुव्यवसायगम्यसुखत्वजातिमद् धर्ममात्रजन्यतावच्छेदकजातिमद् वा निरुपाधिप्रेमास्पदं वा सुखम्।

### (२१९)[अनुव्यवसायलक्षणम्]

सुखादेर्ज्ञानविषयीभावपरामर्शोऽनुव्यवसायः।

### (२२०)[सुखभेदाः]

तच्च सुखं चतुर्विधम्— वैषयिकं मानोरथिकम् आभ्यासिकम् आभिमानिकं च।

### (२२१)[वैषयिकसुखलक्षणम्]

विषयसाक्षात्कारजम् आद्यम्।

### (२२२)[मानोरथिकसुखलक्षणम्]

विषयध्यानजं मानोरथिकम्।

### (२२३)[आभ्यासिकसुखलक्षणम्]

सूर्यनमस्काराद्यभ्यासाज्जायमानं शरीरलाघवादिरूपं तृतीयम्।

### (२२४)[आभिमानिकसुखलक्षणम्]

द्रव्यपाण्डित्यगर्वजम् आभिमानिकम्।

### (२२५)[दुःखलक्षणम्]

दुःखत्वजातिमत् निरूपाधिद्वेषास्पदं वा दुःखम्।

### (२२६)[इच्छालक्षणम्]

इच्छामीत्यनुभवसिद्धा इच्छात्वजातिमतीच्छा।

### (२२७)[द्वेषलक्षणम्]

द्वेष्मीत्यनुभवसिद्धजातिमान् क्रोधापरपर्यायो द्वेषः।

### (२२८)[यत्नलक्षणम्]

यते इत्यनुभवसिद्धयत्नत्वजातिमान् यत्नः।

### (२२९)[यत्नभेदाः]

स द्विधा जीवनयोनिरन्यः च।

### (२३०)[जीवनयोनियत्नलक्षणम्]

आद्यः सर्वदा प्राणसञ्चारकार्यात्मविशेषगुणजनकमनःसंयोगो जीवनम्।

द्वितीयो द्विविधः। एको द्वेषज इच्छाजन्योऽन्यः।

### (२३१)[धर्मलक्षणम्]

विहितयज्ञादिजन्यतावच्छेदकजातिमान् धर्मः।

### (२३२)[अधर्मलक्षणम्]

निषिद्धपरदारगमनादिजन्यतावच्छेदकजातिमान् अधर्मः।

### (२३३)[संस्कारलक्षणम्]

संस्कारत्वजातिमान् संस्कारः।

### (२३४)[संस्कारभेदाः]

स च वेगो भावना स्थितस्थापकः चे ति त्रिविधः।

### (२३५)[वेगलक्षणम्]

वेगेन गच्छतीति प्रत्यक्षसिद्धवेगत्वजातिमान् वेगः।

### (२३६)[भावनालक्षणम्]

अनुभवजन्या स्मृतिहेतुर्भावना। स्मृतिजनकः स्वजन्यस्मृतिनाश्यो [गुणो] भावनेति वा।

### (२३७)[स्थितस्थापकलक्षणम्]

अन्यथाकृतस्य यथावस्थितस्थापकः स्थितस्थापकः।

### (२३८)[शब्दलक्षणम्]

शब्दं शृणोमीत्यनुभवसिद्धशब्दत्वजातिमान् शब्दः[१]।

### (२३९)[शब्दभेदाः]

स द्विधा ध्वनिर्वर्णः च।

तत्र सङ्गीतशास्त्रसिद्धानेकभेदवान् ध्वनिः। वर्णः ककारादिः।

---

१ श्रोत्रग्राह्यो गुणो वा शब्दः।

## (२४०)[कर्मलक्षणम्]

संयोगविभागयोरसमवायिकारणजातीयं कर्म।

## (२४१)[कर्मभेदाः]

तस्य च भेदाः पूर्वत्रोक्ताः।

## (२४२)[उत्क्षेपणकर्मलक्षणम्]

ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम्।

## (२४३)[अपक्षेपणकर्मलक्षणम्]

अधोदेशसंयोगहेतुरपक्षेपणम्।

## (२४४)[आकुञ्चनकर्मलक्षणम्]

वक्रतासम्पादकं कर्म आकुञ्चनम्।

## (२४५)[प्रसारणकर्मलक्षणम्]

ऋजुतासम्पादकं कर्म प्रसारणम्। [७अ]

## (२४६)[गमनकर्मलक्षणम्]

अनियतदिग्देशसंयोगादिकारणं गमनम्।

## (२४७)[सामान्यलक्षणम्]

नित्यम् एकम् अनेकसमवेतं सामान्यम्[१]। तस्य च त्रैविध्यम् उक्तमेव।

## (२४८)[परसामान्यलक्षणम्]

सकलसामान्यव्यापकं परम्।

## (२४९)[अपरसामान्यलक्षणम्]

सामान्यान्तराव्यापकम् अपरम्।

## (२५०)[परापरसामान्यलक्षणम्]

कस्यचित्सामान्यस्य व्यापकं कस्यचिच्च व्याप्यं परापरम्।

---

१ नित्यमित्युक्ते घटात्यन्ताभावेऽतिव्याप्तिः तन्निरासार्थं समवेतमिति। नित्यं समवेतमित्युक्ते जलपरमाणुरूपादावतिप्रसङ्गः तन्निवारणार्थमनेकेति। अनेकसमवेतमित्युक्ते द्वित्वादावतिप्रसक्तिः तदर्थं नित्येति।

## (२५१)[विशेषलक्षणम्]

निःसामान्यत्वे सत्येकद्रव्यमात्रसमवेतत्वं[१] विशेषत्वम्।

## (२५२)[समवायलक्षणम्]

अयुतसिद्धानां सम्बन्धः समवायः[२]।

## (२५३)[अयुतसिद्धलक्षणम्]

विशेषणतान्यसम्बन्धेन यावदुभयसत्त्वं ययोराश्रयाश्रयिभावः तावयुतसिद्धौ।

## (२५४)[अभावभेदाः]

अभावः च संसर्गाभावान्योन्याभावभेदेन द्विधोक्तः।

## (२५५)[संसर्गाभावलक्षणम्]

अन्योन्याभावभिन्नाभावः संसर्गजन्यप्रतीतिविषयाभावो वा संसर्गाभावः।

## (२५६)[अन्योन्याभावलक्षणम्]

तादात्म्यसम्बन्धावच्छिन्नप्रतियोगितात्मकत्वं तादात्म्यारोपजन्यप्रतीतिविषयाभावोऽन्योन्याभाव इति वा।

## (२५७)[संसर्गाभावभेदाः]

आद्यः त्रिधा प्रागभावो ध्वंसोऽत्यन्ताभावः च।

## (२५८)[प्रागभावलक्षणम्]

भविष्यतीति विषयो विनाश्यभावः प्रागभावः।

प्रतियोगिसमवायिकारणवृत्तिः प्रतियोगिजनको भविष्यतीति व्यवहारहेतुः प्रागभाव इति केचित्।

## (२५९)[ध्वंसलक्षणम्]

उत्पत्तिमान् अभावो ध्वंसः। प्रतियोगिजन्यः प्रतियोगिसमवायिवृत्तिर्ध्वस्तव्यवहारहेतुर्ध्वंस इति केचित्।

## (२६०)[अत्यन्ताभावलक्षणम्]

उत्पत्तिविनाशशून्यः संसर्गाभावोऽत्यन्ताभावो नित्यसंसर्गाभावत्वम् अत्यन्ताभावत्वमिति वा।

---

१ सामान्यादिनिरासाय।

२ नित्यः सम्बन्धः समवाय इति वा। संयोगेऽ[ति]व्याप्तिवारणाय नित्येति। आकाशादावतिव्याप्तिवारणाय सम्बन्धेति।

### (२६१)[२.७ प्रवृत्तिलक्षणम्[1]]

अदृष्टजनकानित्ययत्नत्वं प्रवृत्तित्वम्।

### (२६२)[प्रवृत्तिभेदाः]

सा च प्रवृत्तिः त्रिविधा। वाक्क्रिया बुद्धिक्रिया शरीरक्रिया च।

क्रियारम्भः।

### (२६३)[वाक्क्रियालक्षणम्]

वचनोत्पादनद्वारादृष्टहेतुरनित्ययत्नो वागारम्भः।

### (२६४)[बुद्धिक्रियालक्षणम्]

आत्मधर्मोत्पादनद्वारा तादृशः प्रयत्नो बुद्ध्यारम्भः।

### (२६५)[शरीरक्रियालक्षणम्]

भोगावच्छेदद्वारा तादृशः प्रयत्नः शरीरारम्भः।

### (२६६)[२.८ दोषलक्षणम्]

प्रवृत्तिजनकप्रत्यक्षात्मविशेषगुणत्वं दोषत्वम्।

### (२६७)[दोषभेदाः]

स च रागद्वेषमोहभेदात् त्रिविधः।

### (२६८)[रागलक्षणम्]

अदृष्टजनकप्रयत्नजनकेच्छा रागः[2]।

### (२६९)[मोहलक्षणम्]

मोहो विपर्ययः। स चोक्तलक्षण एव।

### (२७०)[२.९ प्रेत्यभावलक्षणम्]

आत्मनः शरीरदोषपर्यन्तेन विश्लेषपूर्वकः सम्बन्धः प्रेत्यभावः।

---

१ पञ्चमषष्ठयोर्बुद्धिमनसोरर्थ एवोक्तत्वात् तस्य पृथङ्निरूपणं न कृतं ग्रन्थकृता। सं.

२ द्वेषलक्षणं तु पूर्वोक्तम्— द्वेष्मीत्यनुभवसिद्धजातिमान् क्रोधापरपर्यायो द्वेषः। सं.

### (२७१)[२.१० फललक्षणम्]

प्रवृत्तिसाध्यं फलम्।

### (२७२)[२.१२ अपवर्गलक्षणम्[१]]

आत्यन्तिको दुःख [७ब][२]ध्वंस अप(सोऽप)वर्गः समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसो वा।

### (२७३)[आत्यन्तिकत्वलक्षणम्]

आत्यन्तिकत्वं च दुःखसमानाधिकरणदुःखतत्प्रागभावासमानकालीनत्वम्।

तद्धेतुश्च तत्त्वज्ञानम्। तच्च विचारेण जायते।

### (२७४)[विचारलक्षणम्]

देहाद्यतिरिक्तव्यापकात्मनिर्णायकम् इतरपक्षाणाम् आभासत्वप्रतिपादकं च न्यायसमूहानुसन्धानं विचारः।

### (२७५)[विचारभेदाः]

स द्विधा श्रवणमननभेदात्।

### (२७६)[श्रवणलक्षणम्]

न्यायनिर्णीततात्पर्यकश्रुत्यादिभिरात्मनिर्णयः श्रवणम्।

### (२७७)[मननलक्षणम्]

वादिदुस्तर्कजालजनितासम्भावनाविपरीतभावनानिवारकन्यायानुसन्धानं मननम्।

### (२७८)[निदिध्यासनलक्षणम्]

व्यासङ्गेन देहाद्यतिरिक्तात्माकारमनोऽनुसन्धानं निदिध्यासनम्।

### (२७९)[तत्त्वज्ञानलक्षणम्]

ततो यथाभूतदेहाद्यतिरिक्तात्मज्ञानं तत्त्वज्ञानम्।

### (२८०)[३ संशयलक्षणम्]

एकस्मिन् धर्मिणि विरोधविषयनानार्थावमर्शो विरुद्धनानाधर्मवैशिष्ट्यज्ञानं वा संशयः।

---

१ दुःखलक्षणस्य तु पूर्वोक्तत्वात् तस्य पृथङ्निरूपणं न कृतं ग्रन्थकृता। सं.

२ अस्य पत्रस्योपरितने भागे टिप्पणिर्लिखिता दृश्यते। उपाधिरनेकपदार्थघटितो धर्मः।

### (२८१)[संशयभेदाः]

स चायं त्रिधा साधारणधर्मजोऽसाधारणधर्मजो विप्रतिपत्तिजः च।

### (२८२)[साधारणधर्मजसंशयलक्षणम्]

स्थाणुपुरुषसाधारणोच्चत्वदर्शनज आद्यः।

### (२८३)[असाधारणधर्मजसंशयलक्षणम्]

उक्तनित्यव्यावृत्तशब्दत्वादिदर्शनजः शब्दो नित्योऽनित्यो वेति द्वितीयः।

### (२८४)[विप्रतिपत्तिजसंशयलक्षणम्]

वादिविरुद्धार्थकवाक्याज्जायमानः तमो द्रव्यं न वेति तृतीयः।

### (२८५)[४ प्रयोजनलक्षणम्]

यदिच्छाप्रयुक्तः पुरुषः प्रवर्तते तत्प्रयोजनम्।

### (२८६)[५ दृष्टान्तलक्षणम्]

व्याप्तिसंवेदनस्थानं सम्प्रतिपत्तिविषयो वा दृष्टान्तः।

### (२८७)[दृष्टान्तभेदाः]

स च साधर्म्यवैधर्म्यभेदेन द्विधा।

### (२८८)[साधर्म्यदृष्टान्तलक्षणम्]

साधनधर्मप्रयुक्तसाध्यधर्मवान् साधर्म्यदृष्टान्तः।

### (२८९)[वैधर्म्यदृष्टान्तलक्षणम्]

साध्यधर्मनिवृत्तिप्रयुक्तसाधनधर्मनिवृत्तिमान् वैधर्म्यदृष्टान्तः।

### (२९०)[६ अवयवलक्षणम्]

अवयवाः तु प्रतिज्ञादयः पञ्च पूर्वत्रोक्ताः।

### (२९१)[प्रतिज्ञावयवलक्षणम्]

हेत्वभिधानप्रयोजकजिज्ञासाजनकज्ञानजनकत्वे सति न्यायावयवत्वं प्रतिज्ञात्वम्।

### (२९२)[हेत्ववयवलक्षणम्]

व्याप्त्यभिधानप्रयोजकजिज्ञासाजनकज्ञानजनकन्यायावयवत्वं हेतुत्वम्।

### (२९३)[उदाहरणावयवलक्षणम्]

पक्षधर्माभिधानप्रयोजकजिज्ञासाजनकज्ञानजनकन्यायावयवत्वम् उदाहरणत्वम्।

### (२९४)[उपनयावयवलक्षणम्]

न्यायैकदेशजन्यपक्षधर्मत्वजिज्ञासानिवर्तकवाक्यत्वम् उपनयत्वम्।

### (२९५)[निगमनावयवलक्षणम्]

एतच्चतुष्टयावयवेतरावयवत्वं निगमनत्वमिति।

### (२९६)[७ सिद्धान्तलक्षणम्]

कथानुकूलः प्रामाणिकत्वप्रकारार्थनिश्चयः सिद्धान्तः। [८अ]

### (२९७)[सिद्धान्तभेदाः]

स चतुर्विधः सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसिद्धान्तभेदात्।

वादिभ्याम् अभ्युपगतस्यार्थकथोपयोगिनोऽभ्युपगमः सर्वतन्त्रसिद्धान्तः।

एकमात्राभ्युपगमः प्रतितन्त्रसिद्धान्तः।

पक्षधर्मताबललभ्यार्थाभ्युपगमोऽधिकरणसिद्धान्तः।

परतन्त्रे साधितः स्वतन्त्रे चाधिकृतोऽभ्युपगमसिद्धान्तः।

### (२९८)[८ तर्कलक्षणम्]

तर्कः तु पूर्वोक्तलक्षणः।

स च व्याघातात्माश्रयेतरेतराश्रयचक्रकानवस्थाप्रतिबन्दीकल्पनालाघवकल्पनागौरवोत्सर्गापवाद[वैयात्य]भेदाद् एकादशप्रकाराः(रः)।

### (२९९)[व्याघातलक्षणम्]

विरुद्धसमुच्चयो व्याघातः।

### (३००)[आत्माश्रयलक्षणम्]

अव्यवधानेन स्वापेक्षणम् आत्माश्रयः।

### (३०१)[इतरेतराश्रयलक्षणम्]

द्वयोरन्योन्यापेक्षणम् इतरेतराश्रयः।

### (३०२)[चक्रकलक्षणम्]

पूर्वस्य पूर्वापेक्षितमध्यमापेक्षितोत्तरापेक्षितत्वं चक्रकम्।

### (३०३)[अनवस्थालक्षणम्]

पूर्वस्योत्तरोत्तरापेक्षित्वम् अनवस्था।

### (३०४)[प्रतिबन्दिलक्षणम्]

चोद्यपरिहारसाम्यं प्रतिबन्दी।

### (३०५)[कल्पनालाघवलक्षणम्]

समर्थाल्पकल्पना कल्पनालाघवम्।

### (३०६)[कल्पनागौरवलक्षणम्]

समर्थानल्पकल्पना कल्पनागौरवम्।

### (३०७)[उत्सर्गलक्षणम्]

भूयोदर्शनम् उत्सर्गः।

### (३०८)[अपवादलक्षणम्]

तस्यैकदेशे बाधोऽपवादः।

### (३०९)[वैयात्यलक्षणम्]

अप्रतिसमाधेयप्रश्नपरस्परायां मौनं वैयात्यम्।

### (३१०)[९ निर्णयलक्षणम्]

प्रमाणतर्काभ्यां स्वपरपक्षसाधनोपालम्भपूर्वको यथार्थाध्यवसायो निर्णयः।

### (३११)[कथालक्षणम्]

नानावक्त्रकपूर्वोत्तरपक्षप्रतिपादकवाक्यसन्दर्भः कथा। वादिप्रतिवाद्यन्यतरसाधनदूषणान्यतरत्वं कथात्वमिति वा।

सा च द्विविधा वीतरागकथा विजिगीषुकथा च।

## (३१२)[१० वादलक्षणम्]

तत्त्वनिर्णयफला वीतरागकथा वादः।

विजिगीषुकथा तु कथकाशक्तिनिरूपणावसाना। जल्पो वितण्डा च उभयसाधनवती विजिगीषुकथा।

## (३१३)[११ जल्पलक्षणम्]

यथोक्तोपपन्नच्छलजातिनिग्रहस्थानसाधनोपालम्भवा[न्] जल्पः।

## (३१४)[१२ वितण्डालक्षणम्]

स्वपक्षस्थापनाहीना पक्षदूषणमात्रावसाना विजिगीषुकथा वितण्डा।

## (३१५)[१३ हेत्वाभासनिरूपणम्]

हेत्वाभासाः च पूर्वत्रैव निरूपिताः। भागासिद्धादयः तु यथायथं पञ्चस्वेवान्तर्भूताः।

येऽपि लक्षणस्य केवलव्यतिरेकिहेतोः त्रयोऽतिव्याप्त्यादयो दोषाः तेऽपि व्याप्यत्वासिद्धादावन्तर्भूताः।

लक्ष्यैकदेशवृत्तित्वम् अव्याप्तिः। अलक्ष्यवृत्तित्वम् अतिव्याप्तिः। लक्ष्यमा[८ ब]त्रावर्तनम् असम्भवः।

## (३१६)[१४ छललक्षणम्]

परतात्पर्यविषये शब्दतात्पर्यसञ्चारेण दूषणवचनं च्छ(छ)लम्।

## (३१७)[ छलभेदाः]

तत् त्रिविधं वाक्छलं सामान्यच्छलम् उपचारच्छलं चेति।

## (३१८)[वाक्छललक्षणम्]

मुख्यवृत्त्या प्रयुक्ते वृत्तिमात्रेण दूषणाभिधानं वाक्छलम्।

## (३१९)[वाक्छलभेदाः]

तद्द्वेधा शक्त्यन्तरे तात्पर्यसञ्चारेण लक्ष्यान्तरे च तात्पर्यसञ्चारेण।

## (३२०)[सामान्यच्छललक्षणम्]

शक्त्युपचारापुरस्कारे चक्षुःतात्पर्यविषये शब्दतात्पर्यकल्पनया दोषाभिधानं सामान्यच्छलम्।

## (३२१)[उपचारच्छललक्षणम्]

उपचारवृत्त्या प्रयुक्ते वृत्तिमात्रेण दूषणाभिधानम् उपचारच्छलम्।

## (३२२)[उपचारच्छलभेदाः]

तदपि द्वेधा शक्यन्तरे तात्पर्यसञ्चारेण लक्ष्यान्तरे च तात्पर्यसञ्चारेण।

## (३२३)[१५ जातिलक्षणम्]

व्याप्तिपक्षधर्मत्वान्यतरापुरस्कारे प्रवृत्तम् उत्तरं जातिः स्वव्याघातकम् उत्तरं जातिरिति वा।

## (३२४)[ जातिभेदाः]

स(सा) चतुर्विंशतिप्रकारा। साधर्म्यसमा, वैधर्म्यसमा, उत्कर्षसमा, अपकर्षसमा, वर्ण्यसमा, अवर्ण्यसमा, विकल्पसमा, साध्यसमा, प्राप्तिसमा, अप्राप्तिसमा, प्रसङ्गसमा, प्रतिदृष्टान्तसमा, अनुत्पत्तिसमा, संशयसमा, प्रकरणसमा, अहेतुसमा, अर्थापत्तिसमा, अविशेषसमा, उपपत्तिसमा, उपलब्धिसमा, अनुपलब्धिसमा, नित्यसमा, अनित्यसमा, कार्यसमेति।

## (३२५)[साधर्म्यसमाजातिलक्षणम्]

साधर्म्यमात्रेण प्रतिरोधाभिधानं साधर्म्यसमा।

## (३२६)[वैधर्म्यसमाजातिलक्षणम्]

वैधर्म्यमात्रेण प्रतिरोधाभिधानं वैधर्म्यसमा।

## (३२७)[उत्कर्षसमाजातिलक्षणम्]

दृष्टान्तेऽदृष्टस्य पक्षधर्मतयानिष्टविशेषापादनम् उत्कर्षसमा।

## (३२८)[अपकर्षसमाजातिलक्षणम्]

व्यापकाभिमतधर्मव्यावृत्त्या प्रकृतानुमानविषयापनयनम् अपकर्षसमा।

## (३२९)[वर्ण्यसमाजातिलक्षणम्]

पक्षवत्साध्यसाधनवत्तया दृष्टान्तस्य हेतुना वर्णनीयत्वापादनं वर्ण्यसमा।

## (३३०)[अवर्ण्यसमाजातिलक्षणम्]

पक्षवत्साध्यवत्तयावर्णनीयत्वापादनम् अवर्ण्यसमा।

## (३३१)[विकल्पसमाजातिलक्षणम्]

व्यभिचारशङ्कोद्भावनं विकल्पसमा।

**(३३२)[साध्यसमाजातिलक्षणम्]**

पक्षसाध्यधर्महेत्वोः च तल्लिङ्गसाध्यत्वापादनं साध्यसमा।

**(३३३)[प्राप्तिसमाजातिलक्षणम्]**

प्राप्तावविशेषेण प्रतिक्षेपः प्राप्तिसमा।

**(३३४)[अप्राप्तिसमाजातिलक्षणम्]**

अप्राप्तावतिप्रसङ्गेन प्रतिषेधोऽप्राप्तिसमा।

**(३३५)[प्रसङ्गसमाजातिलक्षणम्]**

अनवस्थाभासप्रसक्तिः प्रसङ्गसमा।

**(३३६)[प्रतिदृष्टान्तसमाजातिलक्षणम्]**

प्रतिदृष्टान्तमात्रेण साध्यापनयनं प्रतिदृष्टान्तसमा।

**(३३७)[अनुत्पत्तिसमाजातिलक्षणम्]**

प्रागुत्पत्तेक्का(त्तेः का)रणभावात् प्रत्यवस्थानम् अनुत्पत्तिसमा।

**(३३८)[संशयसमाजातिलक्षणम्]**

निर्णयकारणवत्संशयकारणेन प्रत्यवस्थानं संशयसमा।

**(३३९)[प्रकरणसमाजातिलक्षणम्]**

अनधिकबलेन प्रमाणान्तरेण हेतोर्बाधकाभिधानं प्रकरणसमा।

**(३४०)[अहेतुसमाजातिलक्षणम्]**

त्रैकाल्यासिद्धेर्हेतुभावस्य दूषणम् अहेतुसमा।

**(३४१)[अर्थापत्तिसमाजातिलक्षणम्]**

अर्थापत्त्याभासेनानुपेक्षिताभिधानम् अर्थापत्तिसमा।

**(३४२)[अविशेषसमाजातिलक्षणम्]**

अविशेषापादकधर्मक्रान्तस्य समुदायस्यैक [९अ]त्वाद्यविशेषप्रसङ्ग(ङ्गा)पादनेन प्रत्यवस्थानम् अविशेषसमा।

**(३४३)[अनुपपत्तिसमाजातिलक्षणम्]**

उभयत्र कारणोपपत्त्या प्रत्यवस्थानम् अनुपपत्तिसमा।

### (३४४)[उपलब्धिसमाजातिलक्षणम्]

निर्दिष्टकारणाभावेऽपि साध्योपलम्भात् प्रत्यवस्थानम् उपलब्धिसमा।

### (३४५)[अनुपलब्धिसमाजातिलक्षणम्]

अनुपलब्ध्यादेः स्वात्मनि तदतद्रूपविकल्पेन अनिष्टापादनम् अनुपलब्धिसमा।

### (३४६)[नित्यसमाजातिलक्षणम्]

व्यावर्तकधर्मस्य तदतद्रूपविकल्पेन व्यावर्तकत्वखण्डनं नित्यसमा।

### (३४७)[अनित्यसमाजातिलक्षणम्]

विपक्षस्य सपक्षत्वापादनम् अनित्यसमा।

### (३४८)[कार्यसमाजातिलक्षणम्]

परानुमानाङ्गसाधनाय स्वकल्पितहेतुदूषणं कार्यसमा।

### (३४९)[१६निग्रहस्थानलक्षणम्]

पराजयहेतुः कथकाशक्तिसूचकं वा निग्रहस्थानम्।

### (३५०)[निग्रहस्थानभेदाः]

तद्भेदाः तु प्रतिज्ञाहानिः, प्रतिज्ञान्तरम्, प्रतिज्ञाविरोधः, प्रतिज्ञासंन्यासः, हेत्वन्तरम्, अर्थान्तरम्, निरर्थकम्, अविज्ञातम्, अपार्थकम्, अप्राप्तकालम्, न्यूनम्, अधिकम्, पुनरुक्तम्, अननुभाषणम्, अज्ञानम्, अप्रतिभा, विक्षेपः, मतानुज्ञा, पर्यनुयोज्योपेक्षणम्, निरनुयोज्यानुयोगः, अपसिद्धान्तः, हेत्वाभास इति।

### (३५१)[प्रतिज्ञाहानिनिग्रहस्थानलक्षणम्]

स्वीकृतोक्तिपरित्यागः प्रतिज्ञाहानिः।

### (३५२)[प्रतिज्ञाहानिनिग्रहस्थानभेदाः]

सा च पक्षसाध्यहेतुदृष्टान्ततद्विशेषणपरित्यागात् पञ्चधा।

### (३५३)[प्रतिज्ञान्तरनिग्रहस्थानलक्षणम्]

पूर्वानुक्तविशेषणवतः पूर्वोक्तसाधनीयांशस्य प्रतिपादनं प्रतिज्ञान्तरम्।

### (३५४)[प्रतिज्ञान्तरनिग्रहस्थानभेदाः]

तद्द्वेधा लक्षणविशेषणपूरणात् साध्यविशेषणपूरणाच्च।

### (३५५)[प्रतिज्ञाविरोधनिग्रहस्थानलक्षणम्]

एककर्तृकवाक्यावयवयोः परस्परं विरोधः प्रतिज्ञाविरोधः।

### (३५६)[प्रतिज्ञासंन्यासनिग्रहस्थानलक्षणम्]

उक्तापलापः प्रतिज्ञासंन्यासः।

### (३५७)[हेत्वन्तरनिग्रहस्थानलक्षणम्]

अविशिष्टसाधनभागमभिधाय पुनर्विशेषणवत्तद्वचनं हेत्वन्तरम्।

### (३५८)[अर्थान्तरनिग्रहस्थानलक्षणम्]

प्रकृतानुपयोगि अर्थान्तरम्।

### (३५९)[निरर्थकनिग्रहस्थानलक्षणम्]

अवाचकप्रयोगो निरर्थकम्।

### (३६०)[अविज्ञातार्थकनिग्रहस्थानलक्षणम्]

वादिना त्रिरभिहितमपि परिषत्प्रतिवादिभ्यां दुर्बोधम् अविज्ञातार्थम्।

### (३६१)[अनन्वितार्थकनिग्रहस्थानलक्षणम्]

अनन्वितार्थम् अपार्थकम्।

### (३६२)[अप्राप्तकालनिग्रहस्थानलक्षणम्]

अवयवविपर्यासवचनम् अप्राप्तकालम्।[१]

### (३६३)[अधिकनिग्रहस्थानलक्षणम्]

कृतकर्तव्यम् अभिधीयमानम् अधिकम्।

### (३६४)[पुनरुक्तनिग्रहस्थानलक्षणम्]

अनुवादं विना शब्दार्थयोः पुनर्वचनं पुनरुक्तम्।

### (३६५)[अननुभाषणनिग्रहस्थानलक्षणम्]

उक्तस्य ज्ञातस्याप्रत्युच्चारणम् अननुभाषणम्।

---

१ अत्र पङ्क्तौ न्यूनाख्यनिग्रहस्थानलक्षणं लिपिकृता विस्मृतमित्याभाति। **हीनमन्यतमेनाप्यवयवेन न्यूनम्।।** (न्यायसूत्रम्-५.२.१२) **प्रतिज्ञादीनाम् अवयवानाम् एकेनाप्यवयवेन हीनं न्यूनम्।** (भाष्यम्)

### (३६६)[अज्ञाननिग्रहस्थानलक्षणम्]

कथायां प्रकृतविषये स्वाज्ञानाविष्करणम् अज्ञानम्। स्वीयविपर्ययाविष्करणं तदित्येके।

### (३६७)[अप्रतिभानिग्रहस्थानलक्षणम्]

उत्तरावसरे तद्विपरीतो व्यापारोऽप्रतिभा। स च व्यापारः खसूचन-स्वकेश[९ब]संवेशन-राजवार्तादिरूपः।

### (३६८)[विक्षेपनिग्रहस्थानलक्षणम्]

उभयानुमत्या प्रवर्तितायां कथायां व्याजेन कथाविच्छेदनं विक्षेपः। आवश्यकप्राणिधर्मातिरिक्त-व्यासङ्गेन कथाविच्छेदो वा।

### (३६९)[मतानुज्ञानिग्रहस्थानलक्षणम्]

स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा।

स्वपक्षे दोषम् अनुद्धृत्य परस्य दोषापादनं सेत्येके।

अनिष्टरूपेणेष्टापादनं मतानुज्ञेत्यन्ये।

प्रसङ्गाभासमात्रं मतानुज्ञेत्यपरे।

दूषणबुद्ध्या सत्प्रसङ्गो मतानुज्ञेति मणिकाराः।

### (३७०)[पर्यनुयोज्योपेक्षणनिग्रहस्थानलक्षणम्]

निग्रहस्थानज्ञानावसरेऽपि तदनुद्भावनं पर्यनुयोज्योपेक्षणम्।

### (३७१)[निरनुयोज्यानुयोगनिग्रहस्थानलक्षणम्]

अतन्निग्रहस्थानोद्भावनावसरे तन्निग्रहस्थानोद्भावनम् अनुयोगानर्हानुयोगो वा त्यमा(?)न्निग्रहस्थानोद्भावनं वा निरनुयोज्यानुयोगः।

### (३७२)[अपसिद्धान्तनिग्रहस्थानलक्षणम्]

स्वसिद्धान्तातिक्रमोऽपसिद्धान्तः।

शास्त्रोक्तानां लक्षणानां ग्रथनात् सङ्ग्रहात्मना।
मालयेव मणीनां मे जातोऽयं सफलः श्रमः॥
लक्षणानां सङ्ग्रहोऽयं गुरुरत्नप्रसादतः।
नरोत्तमेन रचितो बालानां बुद्धिवृद्धये॥

**॥इति श्रीमद्राजानरत्नाकरकोपाध्यायकपिलभट्टनरोत्तमकरचिते लक्षणसङ्ग्रहः समाप्तः॥**

**॥शुभमस्तु लेखकपाठकयोः॥**

**(१)**

## प्रथमं परिशिष्टम्।

## लक्षणसङ्ग्रहगतानां लक्षणानां वर्णानुक्रमेण सूचिः

| **लक्ष्यम्** | **लक्षणम्** | **परिच्छेदः** |
|---|---|---|
| अज्ञाननिग्रहस्थानलक्षणम् | कथायां प्रकृतविषये स्वाज्ञानाविष्करणम्। स्वीयविपर्ययाविष्करणं तदित्येके। | ३६६ |
| अतिव्याप्तिलक्षणम् | अलक्ष्यवृत्तित्वम्। | ३१५ |
| अत्यन्ताभावलक्षणम् | उत्पत्तिविनाशशून्यः संसर्गाभावः, नित्यसंसर्गाभावत्वम्। | २६० |
| अधोदिग्लक्षणम् | अपक्षेपणसंयोगाश्रयो(या) दिग्। | १७९ |
| अधर्मकर्तृत्वलक्षणम् | धर्मान्यत्वे सत्यधर्मजनकवृत्तिपदार्थविभाजकोपाधिमत्त्वम्। | १२० |
| अधर्मलक्षणम् | निषिद्धपरदारगमनादिजन्यतावच्छेदकजातिमान्। | २३२ |
| अधिकनिग्रहस्थानलक्षणम् | कृतकर्तव्यम् अभिधीयमानम्। | ३६३ |
| अधिकरणसिद्धान्तलक्षणम् | पक्षधर्मताबललभ्यार्थाभ्युपगमः। | २९७ |
| अननुभाषणनिग्रहस्थानलक्षणम् | उक्तस्य ज्ञातस्याप्रत्युच्चारणम्। | ३६५ |
| अनन्तत्वलक्षणम् | अनित्यावृत्तिपदार्थविभाजकोपाधिमत्त्वम्। | १२४ |
| अनन्वितार्थकनिग्रहस्थानलक्षणम् | अनन्वितार्थम्। | ३६१ |
| अनवस्थालक्षणम् | पूर्वस्योत्तरोत्तरापेक्षित्वम्। | ३०३ |
| अनादित्वलक्षणम् | आदिमदवृत्तिपदार्थविभाजकोपाधिमत्त्वम्। | १२३ |
| अनित्यधर्मत्वम् | नित्यधर्ममात्रावृत्तिविभक्तोपाधिमत्त्वम्। | १२५ |
| अनित्यसमाजातिलक्षणम् | विपक्षस्य सपक्षत्वापादनम्। | ३४७ |
| अनुत्पत्तिसमाजातिलक्षणम् | प्रागुत्पत्तेक्का(त्तेः का)रणभावात् प्रत्यवस्थानम्। | ३३७ |
| अनुपपत्तिसमाजातिलक्षणम् | उभयत्र कारणोपपत्त्या प्रत्यवस्थानम्। | ३४३ |
| अनुपलब्धिप्रमाणलक्षणम् | अनुपलब्ध्या जानामीत्यनुभवसिद्धजातिविशेषवती अनुपलब्धिः तत्करणम्। | ७७ |
| अनुपलब्धिसमाजातिलक्षणम् | अनुपलब्ध्यादेः स्वात्मनि तदतद्रूपविकल्पेनानिष्टापादनम्। | ३४५ |
| अनुपसंहारिव्यभिचारिलक्षणम् | अवृत्तिसाध्यहेत्वन्यतरत्वम् अवृत्तिसाध्यकत्वं वा। | ५७ |

| | | |
|---|---|---|
| अनुभवलक्षणम् | स्मृतिव्यतिरिक्तज्ञानम्। | ७ |
| अनुमानप्रमाणलक्षणम् | अनुमितिकरणम्, व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानम्। | २३ |
| अनुमितिलक्षणम् | अनुमिनोमीत्यनुभवसिद्धजातिविशेषवती। | २४ |
| अनुव्यवसायलक्षणम् | सुखादेर्ज्ञानविषयीभावपरामर्शः। | २१९ |
| अनेकत्वलक्षणम् | अनेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वम्। | ११३ |
| अन्यथासिद्धत्वलक्षणम् | अवश्यक्लृप्तपूर्ववर्तिन एव कार्यसम्भवे तत्सहचरितत्वमिति नव्याः, अन्यत्र क्लृप्तपूर्ववर्तिन एव कार्यसम्भवे तत्सहचरितत्वम्, यत्रान्यं प्रति पूर्ववर्तित्वे गृहीत एव यत्रान्यं प्रति पूर्ववर्तिता गृह्यते, यं पुरस्कृत्य यस्य पूर्ववर्तिता गृह्यते, यमादायैव यस्य पूर्ववर्तिता गृह्यत इतीतराः(रे), जनकपूर्ववर्तित्वे गृहीते एव यत्र जन्यपूर्ववर्तिताग्रहः। | १३ |
| अन्योन्याभावलक्षणम् | तादात्म्यसम्बन्धावच्छिन्नप्रतियोगितात्मकत्वम्, तादात्म्यारोपजन्यप्रतीतिविषयाभावः। | २५६ |
| अन्वयलक्षणम् | साध्येन साधनस्य जात्युपाधौ व्याप्तिः। | ३८ |
| अन्वयव्यतिरेकिहेतुलक्षणम् | यत्र साध्यहेत्वोः तदभावयोर्व्याप्तिर्गृह्यते, अन्वयव्यतिरेक्युभयान्यो(हेतुः)। | ४४ |
| अपकर्षसमाजातिलक्षणम् | व्यापकाभिमतधर्मव्यावृत्त्या प्रकृतानुमानविषयापनयनम्। | ३२८ |
| अपक्षेपणकर्मलक्षणम् | अधोदेशसंयोगहेतुः। | २४३ |
| अपरत्वलक्षणम् | अपरत्वजातिमद् अपरव्यवहारासाधारणकारणम्। | २०० |
| अपरसामान्यलक्षणम् | सामान्यान्तराव्यापकम्। | २४९ |
| अपवर्गलक्षणम् | आत्यन्तिको दुःखध्वंसः, समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसः। | २७२ |
| अपवादलक्षणम् | तस्य(उत्सर्गस्य) एकदेशे बाधः। | ३०८ |
| अपसिद्धान्तनिग्रहस्थानलक्षणम् | स्वसिद्धान्तातिक्रमः। | ३७२ |
| अपानलक्षणम् | मूत्रपुरीषयोरधोनयनाद् अपानः। | १७५ |
| अप्रतिभानिग्रहस्थानलक्षणम् | उत्तरावसरे तद्विपरीतो व्यापारः। | ३६७ |
| अप्राप्तकालनिग्रहस्थानलक्षणम् | अवयवविपर्यासवचनम्। | ३६२ |
| अप्राप्तिसमाजातिलक्षणम् | अप्राप्तावतिप्रसङ्गेन प्रतिषेधः। | ३३४ |

| | | |
|---|---|---|
| अबाधितविषयत्वलक्षणम् | विषयः साध्यं तस्याबाधितत्वं यस्य हेतोः। | ४९ |
| अभिधेयत्वलक्षणम् | अभिधानप्रतिपाद्यता, शब्दसङ्गत्युपाधिजो धर्मः। | १०९ |
| अभ्युपगमसिद्धान्तलक्षणम् | परतन्त्रे साधितः स्वतन्त्रे चाधिकृतः सिद्धान्तः। | २९७ |
| अयुतसिद्धलक्षणम् | विशेषणतान्यसम्बन्धेन यावदुभयसत्त्वं ययोराश्रयाश्रयिभावः तौ। | २५३ |
| अयोगिप्रत्यक्षत्वलक्षणम् | अयोगिप्रत्यक्षवृत्तिविभक्तोपाधिमत्त्वम्। | १२७ |
| अर्थान्तरनिग्रहस्थानलक्षणम् | प्रकृतानुपयोगि। | ३५८ |
| अर्थापत्तिप्रमाणलक्षणम् | अर्थापयामीत्यनुभवसिद्धजातिविशेषवती अर्थापत्तिः। तत्करणम्। | ७६ |
| अर्थापत्तिसमाजातिलक्षणम् | अर्थापत्त्याभासेनानुपेक्षिताभिधानम्। | ३४१ |
| अवर्ण्यसमाजातिलक्षणम् | पक्षवत्साध्यवत्तयावर्णनीयत्वापादनम्। | ३३० |
| अवान्तरमहत्त्वलक्षणम् | जन्यमहत्त्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम्। | १४४ |
| अवान्तराणुत्वलक्षणम् | जन्याणुत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम्। | १४३ |
| अविज्ञातार्थकनिग्रहस्थानलक्षणम् | वादिना त्रिरभिहितमपि परिषत्प्रतिवादिभ्यां दुर्बोधम्। | ३६० |
| अविशेषसमाजातिलक्षणम् | अविशेषापादकधर्मक्रान्तस्य समुदायस्य एकत्वाद्यविशेषप्रसङ्ग(ङ्गा)पादनेन प्रत्यवस्थानम्। | ३४२ |
| अव्याप्तिलक्षणम् | लक्ष्यैकदेशवृत्तित्वम्। | ३१५ |
| अव्याप्यवृत्तित्वलक्षणम् | स्वात्यन्ताभावसमानाधिकरणत्वम्। | १९८ |
| असत्प्रतिपक्षत्वलक्षणम् | सत्प्रतिपक्षः साध्याभावसाधको हेतुः तदभावः। | ५० |
| असत्सपक्षत्वलक्षणम् | अनिश्चितसाध्यसाधनसहचारकत्वम्। | ४३ |
| असमवेतत्वलक्षणम् | समवायवृत्त्या अनाधेयत्वम्। | १२८ |
| असम्भवलक्षणम् | लक्ष्यमात्रावृत्तित्वम्। | ३१५ |
| असाधारणधर्मजसंशयलक्षणम् | उक्तनित्यव्यावृत्तशब्दत्वादिदर्शनजः शब्दो नित्योऽनित्यो वेति। | २८३ |
| असाधारणव्यभिचारिलक्षणम् | सपक्षविपक्षव्यावृत्तत्वम्, साध्यव्यापकीभूताभावप्रतियोगित्वम्। | ५६ |
| असिद्धहेत्वाभासलक्षणम् | व्यभिचाराद्यन्यपरामर्शप्रतिबन्धकाभावा[व]च्छेदकधर्मवत्त्वम्। | ६० |
| अस्तित्वलक्षणम् | विधिसुखप्रत्ययवेद्यत्वम्। | १०८ |
| अहेतुसमाजातिलक्षणम् | त्रैकाल्यासिद्धेर्हेतुभावस्य दूषणम्। | ३४० |

| | | |
|---|---|---|
| उपचारच्छललक्षणम् | उपचारवृत्त्या प्रयुक्ते वृत्तिमात्रेण दूषणाभिधानम्। | ३२१ |
| उपनयावयवलक्षणम् | न्यायैकदेशजन्यपक्षधर्मत्वजिज्ञासानिवर्तकवाक्यत्वम्। | २९४ |
| उपमानलक्षणम् | उपमितिकरणम्। | ६७ |
| उपमितिलक्षणम् | उपमिनोमीत्यनुभवसिद्धो जातिविशेषः, शब्दविषयकत्वाव्यभिचारिजातिमत्परोक्षत्वम्। | ६८ |
| उपलब्धिसमाजातिलक्षणम् | निर्दिष्टकारणाभावेऽपि साध्योपलम्भात् प्रत्यवस्थानम्। | ३४४ |
| उपाधिलक्षणम् | यद्धर्मविशिष्टसाध्यव्यापकं तद्धर्मविशिष्टसाधनाव्यापकत्वम्, स्वानधिकरणसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वम्, स्वावच्छिन्नानधिकरणसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्याप कतावच्छेदकत्वम्। | ६५ |
| ऊर्ध्वादिग्लक्षणम् | उत्क्षेपणजन्यसंयोगाश्रयो(या) दिग्। | १७९ |
| ऐतिह्यप्रमाणलक्षणम् | अज्ञातकर्तृकं प्रसिद्धवाक्यम्। | ७९ |
| कथालक्षणम् | नानावक्त्रकपूर्वोत्तरपक्षप्रतिपादकवाक्यसन्दर्भः, वादिप्रतिवाद्यन्यतरसाधनदूषणान्यतरत्वम्। | ३११ |
| कर्मलक्षणम् | संयोगविभागयोरसमवायिकारणजातीयम्। | २४० |
| कर्मवत्त्वलक्षणम् | कर्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम्। | १३४ |
| कल्पनागौरवलक्षणम् | समर्थानल्पकल्पना। | ३०६ |
| कल्पनालाघवलक्षणम् | समर्थाल्पकल्पना। | ३०५ |
| कारणलक्षणम् | अनन्यथासिद्धनियतपूर्ववृत्तित्वम्, अनन्यथासिद्धपूर्ववृत्तित्वम्। | १२ |
| कार्यत्वलक्षणम् | कारणाधीनः स्वात्मलाभ इति केचित्, अभूत्वा भावित्वम्, प्राक्प्रध्वंसाभावोपलक्षिता वस्तुनः सत्तैवानित्यत्वमिति केचित्, उत्पत्तिविनाशयोगः, विनाशावच्छिन्नस्वरूपत्वम्। | १२१ |
| कार्यसमाजातिलक्षणम् | परानुमानाङ्गसाधनाय स्वकल्पितहेतुदूषणम्। | ३४८ |
| काललक्षणम् | कालादिकपरत्वापरत्वानुमेयः। | १७७ |
| केवलव्यतिरेकिहेतुलक्षणम् | अनवगतसाध्यसाधनसहचारोऽसत्सपक्षो वा हेतुः। | ४२ |
| केवलान्वयित्वलक्षणम् | अत्यन्ताभावाप्रतियोगित्वम्। | ४१ |
| केवलान्वयिहेतुलक्षणम् | केवलान्वयिसाध्यकम्। | ४० |

| | | |
|---|---|---|
| त्वगिन्द्रियलक्षणम् | स्पर्शग्राहकं वायवीयम् इन्द्रियम्। | ९३ |
| दक्षिणदिग्लक्षणम् | उदयाचलाभिमुखस्य पुंसो दक्षिणभागावच्छिन्ना दिग्। | १७९ |
| दिग्लक्षणम् | दैशिकपरत्वापरत्वासाधारणकारणम्। | १७८ |
| दुःखलक्षणम् | दुःखत्वजातिमत्, निरुपाधिद्वेषास्पदम्। | २२५ |
| दृष्टान्तलक्षणम् | व्याप्तिसंवेदनस्थानम्, सम्प्रतिपत्तिविषयः। | २८६ |
| दोषलक्षणम् | प्रवृत्तिजनकप्रत्यक्षात्मविशेषगुणत्वम्। | २६६ |
| द्रव्यलक्षणम् | द्रव्यत्वजातिमद् गुणाश्रयः, गुणात्यन्ताभावानधिकरणत्वम्, गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वम्। | १६२ |
| द्रव्यसमवायिकारणत्वलक्षणम् | द्रव्यसमवायिकारणवृत्तिद्रव्यविभाजकोपाधिमत्त्वम्, द्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम्। | १४२ |
| द्वेषलक्षणम् | द्वेष्मीत्यनुभवसिद्धजातिमान् क्रोधापरपर्यायः। | २२७ |
| द्व्यणुकलक्षणम् | नित्यद्रव्यजन्यमणु च स्पर्शवन्नित्यसमवेतम्। | १६६ |
| धर्मकर्तृत्वलक्षणम् | अधर्मान्यत्वे सति धर्मजनकवृत्तिपदार्थविभाजकोपाधिमत्त्वम्। | ११९ |
| धर्मलक्षणम् | विहितयज्ञादिजन्यतावच्छेदकजातिमान्। | २३१ |
| ध्वंसलक्षणम् | उत्पत्तिमान् अभावः, प्रतियोगिजन्यः प्रतियोगिसमवायिवृत्तिर्ध्वस्तव्यवहारहेतुरिति केचित्। | २५९ |
| ध्वनिलक्षणम् | सङ्गीतशास्त्रसिद्धानेकभेदवान्। | २३९ |
| निगमनावयवलक्षणम् | एतच्चतुष्टया(प्रतिज्ञाद्य)वयवेतरावयवत्वम्। | २९५ |
| निग्रहस्थानलक्षणम् | पराजयहेतुः, कथकाशक्तिसूचकम्। | ३४९ |
| नित्यत्वलक्षणम् | विनाशरहितत्वम्, नित्यवृत्तिविभक्तोपाधिमत्त्वम्। | १२५ |
| नित्यसमाजातिलक्षणम् | व्यावर्तकधर्मस्य तदतद्रूपविकल्पेन व्यावर्तकत्वखण्डनम्। | ३४६ |
| निदिध्यासनलक्षणम् | व्यासङ्गेन देहाद्यतिरिक्तात्माकारमनोऽनुसन्धानम्। | २७८ |
| निद्रालक्षणम् | मनःसंयोगजन्यं ज्ञानम्। | २१४ |
| निमित्तकारणलक्षणम् | उभया(समवाय्यसमवाय्य)न्यकारणम्। | १७ |
| निरनुयोज्यानुयोगनिग्रहस्थानलक्षणम् | अतन्निग्रहस्थानोद्भावनावसरे तन्निग्रहस्थानोद्भावनम्, अनुयोगानर्हानुयोगो वात्यमा(?)न्निग्रहस्थानोद्भावनम्। | ३७१ |
| निरर्थकनिग्रहस्थानलक्षणम् | अवाचकप्रयोगः। | ३५९ |

| | | |
|---|---|---|
| निर्गुणत्वलक्षणम् | गुणवदवृत्तिपदार्थविभाजकोपाधिमत्त्वम्। | ११६ |
| निर्णयलक्षणम् | प्रमाणतर्काभ्यां स्वपरपक्षसाधनोपालम्भपूर्वको यथार्थाध्यवसायः। | ३१० |
| निर्विकल्पकप्रत्यक्षप्रमाणलक्षणम् | विशिष्टशब्दाभिलापायोग्यम्, विशेषणविशेष्यवैशिष्ट्यावगाहि। | २२ |
| निष्क्रियत्वलक्षणम् | कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वम्, कर्मवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिशून्यभावत्वम्। | ११७ |
| न्यायलक्षणम् | क्रमिकप्रतिज्ञाद्यवयवसमुदायः। | ३० |
| पक्षतालक्षणम् | अनुमितीच्छाभावविशिष्टसाध्यनिर्णयाभावः। | ४६ |
| पक्षलक्षणम् | पक्षतावान्। | ४५ |
| पतनगुरुत्वलक्षणम् | गुरुत्वप्रयोज्यपतनत्वव्याप्यजातिमत्त्वम्। | १५१ |
| पदलक्षणम् | शक्तम्। | ७० |
| पदार्थलक्षणम् | प्रमितिविषयः। | ९६ |
| परत्वलक्षणम् | परत्वजातिमत्, परव्यवहारासाधारणकारणम्। | २०० |
| परत्वापरत्ववत्त्वलक्षणम् | परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम्। | १३२ |
| परममहत्त्वलक्षणम् | अपकर्षानाश्रयपरिमाणवत्त्वम्। | १३८ |
| परमाणुलक्षणम् | कार्यद्रव्याजन्यं मूर्तं (?) च नित्यः क्रियावान्। | १६५ |
| परसामान्यलक्षणम् | सकलसामान्यव्यापकम्। | २४८ |
| परापरसामान्यलक्षणम् | कस्यचित्सामान्यस्य व्यापकं कस्यचिच्च व्याप्यम्। | २५० |
| परामर्शलक्षणम् | व्याप्तिविशिष्टपक्षधर्मताज्ञानम्। | २६ |
| परार्थानुमानाङ्गनिगमनलक्षणम् | एतन्न्याय(क्रमिकप्रतिज्ञाद्यवयवसमुदाय)घटक-तस्माद्वह्निमानिति-शब्दवृत्तितादृशोपाधिमत्त्वम्, पक्षे साध्योपसंहाररूपं तस्मात्तथेति वाक्यम्। | ३५ |
| परार्थानुमानाङ्गप्रतिज्ञालक्षणम् | एतन्न्याय(क्रमिकप्रतिज्ञाद्यवयवसमुदाय)घटक-पर्वतो वह्निमान्-इतिशब्दवृत्त्यवयवभाजकोपाधिमत्त्वम्, पर्वतो वह्निमानिति-साध्यविशिष्टपक्षबोधकं वचनम्। | ३१ |
| परार्थानुमानाङ्गहेतुलक्षणम् | एतन्न्याय(क्रमिकप्रतिज्ञाद्यवयवसमुदाय) घटकधूमादितिशब्दवृत्तितादृशोपाधिमत्त्वम्, कुत इत्याकाङ्क्षाशमकं धूमादिति पञ्चम्यन्तं लिङ्गवचनम्। | ३२ |

| | | |
|---|---|---|
| प्रत्यक्षविषयत्वलक्षणम् | चाक्षुषप्रत्यक्षविषयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम्। | १४८ |
| प्रमाणलक्षणम् | प्रमायाः करणम्। | ४ |
| प्रमेयलक्षणम् | अन्यज्ञानानुपयोगिनिःश्रेयसाङ्गज्ञानविषयत्वम्। | ८१ |
| प्रयोजनलक्षणम् | यदिच्छाप्रयुक्तः पुरुषः प्रवर्तते। | २८५ |
| प्रवृत्तिलक्षणम् | अदृष्टजनकानित्ययत्नत्वम्। | २६१ |
| प्रसङ्गसमाजातिलक्षणम् | अनवस्थाभासप्रसक्तिः। | ३३५ |
| प्रसारणकर्मलक्षणम् | ऋजुतासम्पादकं कर्म। | २४५ |
| प्रागभावलक्षणम् | भविष्यतीति विषयो विनाश्यभावः,<br>प्रतियोगिसमवायिकारणवृत्तिः प्रतियोगिजनको<br>भविष्यतीति व्यवहारहेतुरिति केचित्। | २५८ |
| प्राणलक्षणम् | मुखनासिकाभ्यां निष्क्रमणात् प्राणः। | १७५ |
| प्राप्तिसमाजातिलक्षणम् | प्राप्तावविशेषेण प्रतिक्षेपः। | ३३३ |
| प्रेत्यभावलक्षणम् | आत्मनः शरीरदोषपर्यन्तेन विश्लेषपूर्वकः सम्बन्धः। | २७० |
| फललक्षणम् | प्रवृत्तिसाध्यम्। | २७१ |
| बाधहेत्वाभासलक्षणम् | सपक्षे साध्याभावनिर्णयो बाधः। तथाविधः। | ६६ |
| बाह्येन्द्रियग्राह्यत्वलक्षणम् | बाह्येन्द्रियप्रत्यक्षवृत्तिद्रव्यत्वापरजातिमत्त्वम्। | १४७ |
| बुद्धिक्रियालक्षणम् | आत्मधर्मोत्पादनद्वारा तादृशः(अदृष्टहेतुरनित्यः) प्रयत्नः। | २६४ |
| बुद्धिलक्षणम् | जानामीति व्यवसायगम्यबुद्धित्वजातिमती। | २०७ |
| भक्तिलक्षणम् | आराध्यत्वेन ज्ञानम्। | २१६ |
| भावत्वलक्षणम् | समवायैकार्थसमवायान्यतरसम्बन्धेन सत्तावत्त्वम्। | ९८ |
| भावनालक्षणम् | अनुभवजन्या स्मृतिहेतुः, स्मृतिजनकः<br>स्वजन्यस्मृतिनाश्यो [गुणः]। | २३६ |
| भास्वरत्वलक्षणम् | परप्रकाशत्वावच्छेदकजातिविशेषो भास्वरत्वम्। तद्वत्। | १९० |
| भूतत्वलक्षणम् | बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्,<br>संस्कारत्वान्यबहिरिन्द्रियग्राह्यगुणत्वव्याप्यजातिमद्विशेषगुणवत्त्वम्,<br>आत्मावृत्तिविशेषगुणवत्त्वम्। | १४० |
| भोगलक्षणम् | शरीरिसमवेतसुखदुःखान्यतमसाक्षात्कारः। | ८६ |

| | | |
|---|---|---|
| भोगायतनत्वलक्षणम् | यदवच्छिन्न आत्मनि भोगो जायते। | ८५ |
| भौमत्वलक्षणम् | अबिन्धनव्यावृत्या काष्ठेन्धनाग्निवृत्तिजातिविशेषः। | १७३ |
| मतानुज्ञानिग्रहस्थानलक्षणम् | स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गः, स्वपक्षे दोषमनुद्धृत्य परस्य दोषापादनम् इत्येके, अनिष्टरूपेणेष्टापादनम् इत्यन्ये, प्रसङ्गाभासमात्रम् इत्यपरे, दूषणबुद्ध्या सत्प्रसङ्ग इति मणिकाराः। | ३६९ |
| मननलक्षणम् | वादिदुस्तर्कजालजनितासम्भावनाविपरीत-भावनानिवारकन्यायानुसन्धानम्। | २७७ |
| मनोलक्षणम् | आत्मतद्गुणादिप्रत्यक्षकारणम्, स्पर्शरहितत्वे सति क्रियावत्त्वम्। | १८४ |
| मानोरथिकसुखलक्षणम् | विषयध्यानजं [सुखम्]। | २२२ |
| मिथ्याबुद्धिलक्षणम् | असद्विषयिणीति वाचस्पतिमिश्राः, विशेष्यासम्बन्धविशेषणविषयकत्वम् इत्याचार्यादयः। | २०९ |
| मोहलक्षणम् | विपर्ययः। | २६९ |
| यत्नलक्षणम् | यते इत्यनुभवसिद्धयत्नत्वजातिमान्। | २२८ |
| यथार्थत्वलक्षणम् | तद्वति तदवगाहित्वम्। | ६ |
| योग्यतालक्षणम् | एकपदार्थेऽपरपदार्थस्य प्रकृतसंसर्गवत्त्वम्। | ७२ |
| रसनेन्द्रियलक्षणम् | रसग्राहकम् आप्यमिन्द्रियम्। | ९१ |
| रसलक्षणम् | रसनेन्द्रियमात्रग्राह्यजातिमान्। | १८७ |
| रागलक्षणम् | अदृष्टजनकप्रयत्नजनकेच्छा। | २६८ |
| रूपलक्षणम् | चक्षुर्मात्रग्राह्यजातिमद्गुणत्वम्। | १८६ |
| लक्षणस्य लक्षणम् | असाधारणधर्मवचनम्। | १६१ |
| लक्षणालक्षणम् | शक्यसम्बन्धः। सा च स्वशक्येन सह नियमरूपा व्याप्तिरेव। | ७४ |
| वर्णलक्षणम् | ककारादिः। | २३९ |
| वर्ण्यसमाजातिलक्षणम् | पक्षवत्साध्यसाधनवत्तया दृष्टान्तस्य हेतुना वर्णनीयत्वापादनम्। | ३२९ |
| वाक्क्रियालक्षणम् | वचनोत्पादनद्वारादृष्टहेतुरनित्ययत्नः। | २६३ |
| वाक्छलम् | मुख्यवृत्त्या प्रयुक्ते वृत्तिमात्रेण दूषणाभिधानम्। | ३१८ |
| वादलक्षणम् | तत्त्वनिर्णयफला वीतरागकथा। | ३१२ |

| | | |
|---|---|---|
| वायुलक्षणम् | वायुत्ववान्, नीरूपस्पर्शवान्। | १७४ |
| विकल्पसमाजातिलक्षणम् | व्यभिचारशङ्कोद्भावनम्। | ३३१ |
| विक्षेपनिग्रहस्थानलक्षणम् | उभयानुमत्या प्रवर्तितायां कथायां व्याजेन कथाविच्छेदनम्, आवश्यकप्राणिधर्मातिरिक्तव्यासङ्गेन कथाविच्छेदः। | ३६८ |
| विचारलक्षणम् | देहाद्यतिरिक्तव्यापकात्मनिर्णायकम् इतरपक्षाणाम् आभासत्वप्रतिपादकं च न्यायसमूहानुसन्धानम्। | २७४ |
| वितण्डालक्षणम् | स्वपक्षस्थापनाहीना पक्षदूषणमात्रावसाना विजिगीषुकथा। | ३१४ |
| विपक्षलक्षणम् | निर्णीतसाध्याभावसाधकः। | ४८ |
| विपर्ययलक्षणम् | प्रतियोगिव्यधिकरणतदभाववति तत्प्रकारको निर्णयः, अयथार्थनिश्चयात्मकं जाग्रज्ज्ञानम् इति केचित्। | २११ |
| विप्रतिपत्तिजसंशयलक्षणम् | वादिविरुद्धार्थकवाक्याज्जायमानः तमो द्रव्यं न वा इति। | २८४ |
| विभागलक्षणम् | विभक्ताविति प्रतीतिसिद्धविभागत्वजातिमान्, विभक्तप्रत्ययासाधारणकारणम्, संयोगनाशको गुणः। | १९९ |
| विरुद्धहेत्वाभासलक्षणम् | साध्यासमानाधिकरणत्वम्, साध्यव्यापकाभावप्रतियोगिहेतुकत्वम्। | ५८ |
| विशेषगुणत्वलक्षणम् | स्वाश्रयव्यवच्छेदोचितावान्तरसामान्यविशेषवत्त्वम्, गुणत्वापरजातिमत्तया नियतैकद्रव्यव्यवच्छेदकत्वम्। | १५४ |
| विशेषलक्षणम् | निःसामान्यत्वे सत्येकद्रव्यमात्रसमवेतत्वम्। | २५१ |
| विषयलक्षणम् | शरीरेन्द्रियव्यतिरिक्तमात्मोपभोसाधनं द्रव्यम्, विषयतासम्बन्धेन साक्षात्कारवत्त्वम्। | १६७ |
| वेगलक्षणम् | वेगेन गच्छतीति प्रत्यक्षसिद्धवेगत्वजातिमान्। | २३५ |
| वेगवत्त्वलक्षणम् | वेगवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम्। | १३४ |
| वैधर्म्यदृष्टान्तलक्षणम् | साध्यधर्मनिवृत्तिप्रयुक्तसाधनधर्मनिवृत्तिमान्। | २८९ |
| वैधर्म्यसमाजातिलक्षणम् | वैधर्म्यमात्रेण प्रतिरोधाभिधानम्। | ३२६ |
| वैयात्यलक्षणम् | अप्रतिसमाधेयप्रश्नपरस्परायां मौनम्। | ३०९ |
| वैषयिकसुखलक्षणम् | विषयसाक्षात्कारजम् [सुखम्]। | २२१ |
| व्यतिरेकलक्षणम् | तादृक्साधनाभावेन तादृक्साध्याभावस्य व्याप्तिः। | ३९ |
| व्यभिचारिहेत्वाभासलक्षणम् | प्रतियोगिव्यधिकरणसाध्याभाववद्वृत्तित्वम्, | |

| | | |
|---|---|---|
| स्थितस्थापकलक्षणम् | अन्यथाकृतस्य यथावस्थितस्थापकः। | २३७ |
| स्नेहलक्षणम् | सङ्ग्रहरूपकार्यानुमेयो गुणः। | २०६ |
| स्पर्शलक्षणम् | त्वगिन्द्रियमात्रग्राह्यजातिमान्। | १८९ |
| स्मृतिलक्षणम् | संस्कारमात्रजं ज्ञानम्, गृहीतमात्रविषयः संस्कारजः प्रत्ययः, स्मरामीत्यनुभवसिद्धजातिमती। | ८ |
| स्वप्नलक्षणम् | संशयविपर्ययात्मकस्मरणमेवेति नैयायिकाः, दुष्टमनोजन्यं ज्ञानम् इत्यन्ये। | २१४ |
| स्वरूपासिद्धहेत्वाभासलक्षणम् | पक्षे हेतुस्वरूपाभावः। | ६२ |
| स्वार्थानुमानप्रमाणलक्षणम् | स्वानुमितिहेतुः। | २८ |
| हेत्वन्तरनिग्रहस्थानलक्षणम् | अविशिष्टसाधनभागमभिधाय पुनर्विशेषणवत्तद्वचनम्। | ३५७ |
| हेत्ववयवलक्षणम् | व्याप्त्यभिधानप्रयोजकजिज्ञासाजनकज्ञानजनकन्यायावयवत्वम्। | २९२ |
| हेत्वाभासलक्षणम् | एतादृश(सपक्षवृत्तित्वादि)रूपशून्या हेतुवदाभासमानाः, अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वम्। | ५१ |

(२)

# द्वितीयं परिशिष्टम्।

(अ)

श्रीमदुदयनाचार्यविरचिता

# लक्षणावली

॥श्रीनृसिंहो विजयति॥

**प्रणम्य पार्वतीनाथं[१] नित्यविज्ञानमीश्वरम्।**
**द्रव्यादिसर्वमेयानां करिष्ये लक्षणावलीम्॥**

## [पदार्थनिरूपणम्]

अभिधेयः पदार्थः। स द्विविधः। भावाभावभेदात्।

तत्र नञर्थविषयत्वरहितप्रत्ययविषयो भावः। स च षोढा द्रव्यादिभेदेन। तत्रानित्यद्रव्यगुणकर्मसामान्यविशेषाः समवेताः। नित्यद्रव्यसमवायाभावाः समवेतत्वरहिताः। द्रव्यगुणकर्माणि समवेतवन्ति। सामान्यविशेषसमवायाभावाः समवेतरहिताः।

## [द्रव्यनिरूपणम्]

तत्र गुणात्यन्ताभावानधिकरणं द्रव्यम्। मूर्तत्वरहितसमवेतसमवेतत्वरहितमूर्तत्वरहितामूर्तत्वरहितसमवेतजातिमद्वा[२]। गन्धासमवेतगगनारविन्दसमवेतजातिमद्वा[३]। समवेतसमवेतसमवेतं वा[४]। तच्च नवधा भिद्यते पृथिव्यादिभेदेन। तमो द्रव्यं न भवति आलोकनिरपेक्षचक्षुर्ग्राह्यत्वात्। आलोकाभाववत्तमःशब्दवाच्यत्वेन विप्रतिपत्तिविषयतया पक्षत्वम्, आलोकाभावशब्दवाच्यतया सम्प्रतिपत्तिविषयतया साध्ययोगित्वेन सपक्षत्वमिति न पक्षसपक्षयोरैक्यदोषः। तमःशब्दो द्रव्यवाचको न भवति आलोकशब्दान्यत्वे[५] सति आलोकनिरपेक्षचक्षुर्ग्राह्यवाचित्वात्। आलोकाभावशब्दवत्।

## [पृथिवीनिरूपणम्]

तत्र गन्धात्यन्ताभावरहिता पृथिवी। करकासमवेतवाजिविषाणसमवेतजातिमती वा[६]। सा द्विविधा

---

१ पार्वतीकान्तं—पा० ३ पुस्तके।

२ मूर्तत्वरहितं यत् समवेतं गुणादिकं तत् समवेतत्वरहिता मूर्तत्वरहितसमवेतामूर्तत्वरहितसमवेता या जातिः तद्वत्।

३ गन्धासमवेता गगनसमवेतारविन्दसमवेता च या जातिः तद्वदित्यर्थः। सत्तामादाय गुणादावतिव्याप्तिरतो गन्धासमवेतेति।

४ समवेतं समवेतं यत्र तत् समवेतसमवेतं गुणादिकं तत् समवेतं यत्र तत् समवेतसमवेतसमवेतमित्यर्थः।

५ आलोकशब्दस्यालोकनिरपेक्षचक्षुर्ग्राह्यालोकवाचित्वात् तत्र च द्रव्यवाचकत्वाद् व्यभिचार इति सत्यन्तम्।

६ करकायामसमवेता वाजिनि विषाणे च समवेता या जातिः तद्वतीत्यर्थः॥

नित्यानित्यभेदात्। नित्यः परमाणुरनित्या कार्यरूपा। पृथिवीत्वं नित्यवृत्तिघटपटवृत्तिजातित्वात् सत्तावदिति तत्सिद्धिः। न च पक्षासिद्धिः। घटो गगनवृत्तित्वरहितपटवृत्तिजातिमान् घटपटव्यतिरेकित्वरहितत्वात् पटवदिति पृथिवीत्वसिद्धिः। न च सत्ताऽसिद्धिः, गगनं द्रव्यत्वेतरजातिमत् भूतत्वाद् घटवदित्यनुमानात् सत्तासिद्धिः। न च द्रव्यत्वासिद्धिः, गगनादि रूपावृत्तिजातिमद् गुणवत्त्वाद् घटवदिति द्रव्यत्वसिद्धिः। कार्यं त्रिविधं शरीरादिभेदेन। तत्र भोगायतनम् अन्त्यावयवि शरीरम्। शरीरसंयुक्तम् अपरोक्षप्रतीतिसाधनम् अतीन्द्रियम् इन्द्रियम्। ज्ञानकरण-जन्यत्वरहितज्ञानत्वम् अपरोक्षत्वम्। अतीन्द्रियत्वं नामाज्ञातसाधनत्वम्। प्रतीयमानतया भोगसाधनं विषयः। इति पृथिवीप्रकरणम्।

## [जलनिरूपणम्]

पृथिवीवृत्तित्वरहितहिमकरकावृत्तिजातिमज्जलम्। तन्नित्यानित्यभेदाद् द्विविधम्। जलत्वं नित्यवृत्तिहि-मकरकावृत्तिजातित्वात् सत्तावदिति तत्सिद्धिः। करका गगनवृत्तित्वरहितहिमवृत्तिजातिमती स्नेहाधिकरणत्वाद् हिमवदिति करकायां तत्सिद्धिः। अनित्यं त्रिविधं शरीरादिभेदेन। शरीरं वरुणलोके। जलपरमाणवः पारम्पर्येण शरीरारम्भकाः, इन्द्रियारम्भकत्वात् पार्थिवपरमाणुवत्। इन्द्रियारम्भकत्वं तु रसनस्याप्यत्वात् सिद्धम्। रसनमाप्यं रूपादिषु पञ्चसु मध्ये रसस्यैवाभिव्यञ्जकत्वात्। सक्तुरसाभिव्यञ्जकसलिलवदिति। रसनसिद्धिः तु रसोपलब्धिः करणसाध्यापरोक्षप्रतीतित्वाद् रूपोपलब्धिवदिति। विषयः तु सरित्समुद्रादिर्हिमकरकादिः। न च करकायाः काठिन्यात् पार्थिवत्वमाशङ्कनीयम्, अनन्तरमेव स्वभावापगमादिति। इत्यापःप्रकरणम्।

## [तेजोनिरूपणम्]

रसात्यन्ताभावसमानाधिकरणरूपाधिकरणं तेजः करकावृत्तित्वरहितविद्युदाकरजवृत्तिजातिमद्वा। विद्युत्तेजः करकावृत्तित्वरहिताकरजवृत्तिजातिमती वा। विद्युद्व्यतिरिक्ताकरजान्यत्वरहितत्वाद् आकरजवत्। आकरजं सुवर्णादि। ननु सुवर्णादिकं पार्थिवं नैमित्तिकद्रवत्वाधिकरणत्वाद् घृतवत्। अनेन पार्थिवत्वसिद्धौ आकरजवृत्तिजातिमत्त्वसाधनेऽपि विद्युत्तेजसो न तैजसत्वसिद्धिरिति चेन्न, सुवर्णादिकम् अपार्थिवम् अत्यन्ता-ग्निसंयोगेऽपि अनुच्छिद्यमानद्रवत्वाधिकरणत्वादिति प्रत्यनुमानेनापार्थिवत्वसिद्धौ असांसिद्धिकद्रवत्वेन तत्सिद्धिः। अन्यथा पार्थिवत्वे द्रवत्वमत्यन्ताग्निसंयोगे उच्छिद्येतेति तर्कोऽनुसरणीयः। तच्च द्विविधम्। नित्यमनित्यं चेति। तेजस्त्वं नित्यवृत्ति विद्युदाकरजवृत्ति जातित्वात् सत्तावदिति नित्यत्वसिद्धिः। साधितं तेजस्त्वम्। अनलं त्रिविधम्। शरीरादिभेदेन। शरीरमादित्यलोके तस्यापि पूर्ववत्सिद्धिः। इन्द्रियं रूपोपलम्भकं चक्षुः। रूपोपलब्धिः करणसाध्या क्रियात्वाच्छिदिक्रियावादिति तत्सिद्धिः। कर्तृप्रेर्यं करणम्। धातुवाच्या क्रिया। चक्षुः तैजसं रूपादिषु पञ्चसु मध्ये रूपस्यैवाभिव्यञ्जकत्वाद् आलोकवत्। विषयः तु भौमादिः। इति तेजःप्रकरणम्।

## [वायुनिरूपणम्]

रूपात्यन्ताभावाधिकरणस्पर्शाधिकरणो वायुः। विप्रतिपन्नः स्पर्शो रूपरहितद्रव्यवृत्तिः स्पर्शत्वरहितशब्दान्यत्वरहितत्वात् शब्दवदिति वायुसिद्धिः। स च द्विविधः। नित्यानित्यभेदेन। वायुत्वं नित्यवृत्ति नित्यवृत्तित्वरहितवायुत्वान्यत्वरहितत्वात् पृथिवीत्ववदिति तत्सिद्धिः। कार्यं त्रिविधं शरीरादिभेदेन। वायुत्वं शरीरवृत्ति बाह्येन्द्रियवृत्तिजातित्वात् सत्तावदिति तत्सिद्धिः। स्पर्शोपलम्भकमिन्द्रियं वायवीयं रूपादिषु पञ्चसु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वात्, व्यजनपवनवदिति। विषयः तूपलभ्यमानस्पर्शाधिष्ठानभूतः प्राणः तु शरीरादिप्रेरणहेतुर्वायुः। इति वायुप्रकरणम्।

## [आकाशनिरूपणम्]

शब्दात्यन्ताभावानधिकरणं नभः संयोगजन्यजन्यविशेषगुणसमानाधिकरणविशेषाधिकरणं वा। शब्दः क्वचिदाश्रितो गुणत्वाद्रूपवत्। न च शब्दस्य स्पर्शवदाश्रयः स्पर्शासहकारित्वाद् बुद्धिवदिति। न च कालाद्याश्रयो बाह्येन्द्रियग्राह्यत्वाद् रूपवदिति परिशेषात्तत्सिद्धिः। इत्याकाशप्रकरणम्।

## [कालनिरूपणम्]

अनियतपरत्वासमवायिसमवायित्वरहितपरत्वासमवायिसमवायिमूर्तत्वरहितः कालः। गगनम् अनियतपरत्वासमवायिसमवायित्वरहितमूर्तत्वरहितज्ञानसमवायित्वरहितत्वद्रव्यान्यद् अमूर्तत्वादात्मवदिति तत्सिद्धिः। इति कालप्रकरणम्।

## [दिङ्निरूपणम्]

अनियतपरत्वासमवायिसमवायिनी मूर्तत्वरहिता दिक्। कालो विशेषगुणरहितो मूर्तद्रव्यान्यो मूर्तत्वरहितत्वाद् आकाशादिवदिति तत्सिद्धिः। इति दिक्प्रकरणम्।

## [आत्मनिरूपणम्]

ज्ञानात्यन्ताभावरहित आत्मा। परत्वासमवायिसमवायित्वरहितशब्दासमानाधिकरणकार्याश्रयो वा। ज्ञानं क्वचिदाश्रितं गुणत्वाद्रूपवदिति तत्सिद्धिः। न च शरीरेन्द्रियाणां तदाश्रयत्वं कार्यत्वाद् घटवदिति। कार्यस्य तदाश्रयत्वे स्वर्गाद्यर्थितया ज्योतिष्टोमाद्युपदेशो न स्यात्। न च मनसः तदाश्रयत्वं करणत्वाच्चक्षुर्वत्। स द्विविधः। ईश्वरानीश्वरभेदात्। अङ्कुरादिकं सकर्तृकं कार्यत्वाद् घटवदिति ईश्वरसिद्धिः। द्वितीयः त्वहम्प्रत्ययवेद्यः स च नाना व्यवस्थावचनादिति। इत्यात्मप्रकरणम्।

## [मनोनिरूपणम्]

स्पर्शरहितत्वे सति मूर्तं मनः। विशेषगुणात्यन्ताभावाधिकरणत्वे सति मूर्तं वा। पृथिवीवृत्तिपृथिवीत्व-

रहितवृत्तिवृत्तित्वरहितगुणत्वव्याप्यजातिमान् विशेषगुणः। आत्मप्रतीतिः करणसाध्यापरोक्षप्रतीतित्वाद् रूपोपलब्धिवदिति तत्सिद्धिः। इति मनःप्रकरणम्।

।इति द्रव्यपदार्थः।

## [गुणपदार्थनिरूपणम्]

संयोगाजन्यसंयोगासमवायिसमवेतत्वरहितसंयोगासंयोगसमवेतवान् गुणः। विभागाजन्यविभागासमवायिसमवेतत्वरहितविभागाविभागसमवेतवान् गुणः। रूपं संयोगाजन्यसंयोगासमवायिसमवेतत्वरहित-संयोगसमवेतत्वरहितसंयोगसमवेतवद् रूपत्वरहितसंयोगान्यत्वरहितत्वात् संयोगवदिति गुणत्वसिद्धिः। चतुर्विंशतिप्रकारो रूपादिभेदेन।

## [रूपनिरूपणम्]

रसासमवेतनीलपीतसमवेतवद् रूपम्। गुणत्वे सति चक्षुर्मात्रग्राह्यं वा। तत्सप्तप्रकारम्। न च रूपग्राहकं चक्षुश्चक्षुर्मात्रग्राह्यं रूपमित्यन्योन्याश्रयत्वम्। नयनगोलकाधिष्ठानत्वेन चक्षुर्निरूपणात्। शुक्लो रसासमवेतनील-समवेतवान् शुक्लत्वरहितनीलान्यत्वरहितत्वान्नीलवदिति रूपत्वसिद्धिः। नीलं स्वमात्रसमवेतवत् स्वमात्रसम-वेतत्वरहितनीलान्यत्वरहितत्वाद् घटवदिति नीलत्वजातिसिद्धिः। नीलत्वरहितघटत्वात्यन्ताभावत्वरहितः स्वशब्दार्थः।

## [रसनिरूपणम्]

गुणत्वे सति रसनग्राह्यो रसः। स च षोढा माधुर्यादिभेदेन। क्षीरेक्षुगुडसलिलेषु माधुर्यादिसाम्येऽपि अवान्तरजातिभेदस्य विद्यमानत्वाद् विशेषगुणत्वसिद्धिः।

## [गन्धनिरूपणम्]

गुणत्वे सति घ्राणग्राह्यो गन्धः। जलादावौपाधिकी गन्धप्रतीतिर्न स्वभावत इति विशेषगुणत्वसिद्धिः। जलं न गन्धाधिकरणं पाकजरूपानधिकरणत्वात्तेजोवत्। वायोः पक्षतुल्यत्वान्न व्यभिचारः।

## [स्पर्शनिरूपणम्]

गुणत्वे सति त्वगिन्द्रियग्राह्यः स्पर्शः। स त्रिविधः। शीतोष्णानुष्णाशीतभेदात्। नन्वनुष्णाशीतस्पर्शस्य कथं विशेषगुणत्वं तस्य पृथिवीवायुसाधारणत्वात् पाकजत्वापाकजत्वाभ्याम् अवान्तरजातिभेदेन विशेषगुणत्वे नैमित्तिकद्रवत्वस्याप्यत्यन्ताग्निसंयोगे सत्युच्छेदानुच्छेदाभ्याम् अवान्तरजातिसद्भावेन विशेषगुणता स्यात्। ततः च नैमित्तिकद्रवत्वस्य सामान्यगुणपाठो निरर्थकः स्यात्। अनुष्णाशीतस्पर्शस्य वा पाठः स्यात्। ततः च वायोर्बाह्येन्द्रियग्राह्यविशेषगुणपाठो निरर्थकः स्यात्। सेयमुभयतःपाशा रज्जुः, मैवम्, अवान्तरजातिभेदस्य क्षीरेक्षुगुडमाधुर्यादिवदनुभवसिद्धत्वात्। अन्यथा महान्धकारे स्पर्शोपलम्भमात्रेण वायुर्वातीति प्रत्ययो न स्यात्।

न चैवं सति नैमित्तिकद्रवत्वस्यावान्तरजातिभेदानुभवः। वायुस्पर्शः पृथिवीवृत्तित्वरहितगुणत्वव्याप्यजातिमान् अपाकजस्पर्शत्वात् तेजःस्पर्शवदित्यनुमानात्।

## [सङ्ख्यानिरूपणम्]

पृथक्त्वासमवेतसर्वान्योन्याभावसमानाधिकरणैकद्रव्यसमवेतवती सङ्ख्या। आदाविन्द्रियसन्निकर्षघटनाद् एकत्वसामान्यधीरेकत्वोभयगोचरा गतिरतो द्वित्वं ततो जायते द्वित्वत्वप्रमितिः स्वतोऽपि परतो द्वित्वप्रमानन्तरं द्वे द्रव्ये इति धीरियं निगदिता द्वित्वोदयप्रक्रिया।

## [परिमाणनिरूपणम्]

सङ्ख्यासमवेतत्वरहितसङ्ख्यासमवायिकारणसमवेतवत् परिमाणम्।

## [पृथक्त्वनिरूपणम्]

शब्दासमवायिकारणसमवेतत्वरहितसर्वान्योन्याभावसमानाधिकरणसमवेतपरिमाणासमवायिसमवेतत्वरहिताधिकरणं पृथक्त्वम्।

## [संयोगनिरूपणम्]

विभागासमवेतत्वाभावाविरोधिसमवेतप्रध्वंसप्रतियोगित्वानधिकरणसमवेतत्वानधिकरणगुणत्वसाक्षाद् व्याप्यजात्यधिकरणं संयोगः।

## [विभागनिरूपणम्]

विभागासमवेतसर्वान्योन्याभावसमानाधिकरणसमवेतशब्दासमवायिसमवेतवान् वा संयोगः। संयोगासमवेतसर्वान्योन्याभावसमानाधिकरणसमवेतशब्दासमवायिसमवेतवान् विभागः।

## [परत्वापरत्वनिरूपणम्]

विशेषणतया परप्रत्ययनिमित्तं परत्वम्। विशेषणतयापरप्रत्ययनिमित्तमपरत्वम्।

## [बुद्धिनिरूपणम्]

अर्थप्रकाशो बुद्धिः।

## [सुखनिरूपणम्]

यस्मिन् सत्यनुरागः तत् सुखम्।

## [दुःखनिरूपणम्]

यस्मिन् सत्यनुद्वेषः तद्दुःखम्।

### [इच्छानिरूपणम्]

प्रार्थना इच्छा।

### [द्वेषनिरूपणम्]

ज्वलनात्मको द्वेषः।

### [प्रयत्ननिरूपणम्]

प्रयत्न उत्साहः।

### [गुरुत्वनिरूपणम्]

आद्यपतनासमवायिकारणं गुरुत्वम्।

### [द्रवत्वनिरूपणम्]

आद्यस्यन्दनासमवायिकारणं द्रवत्वम्।

### [स्नेहनिरूपणम्]

पृथिवीवृत्त्यवृत्तिरससमानाधिकरणवृत्तिशब्दावृत्तिगुणत्वसाक्षाद्व्याप्यजातिमान् स्नेहः। द्रवत्वनिष्ठत्वरहितात्मविशेषगुणनिष्ठत्वरहितपरत्वापरत्वात्यन्ताभावप्रतियोगिसत्तावान्तरजातिमदसमवायिकारणं स्नेहः। द्रवत्वरहितध्वंसान्यत्वविशेषगुणमात्रजनकरहितात्यन्ताविशेषगुणरहितभावत्वं समवायिकारणं स्नेहः। सङ्ग्रहादिहेतुः।

### [संस्कारनिरूपणम्]

गगनसमवेतसमवेतत्वरहितो मूर्तामूर्तसमवेतसमवेतवान् संस्कारः।

### [धर्माधर्मनिरूपणम्]

विहितक्रियया साध्यः पुङ्गुणो धर्मः। निषिद्धक्रियया साध्यः पुङ्गुणोऽधर्मः।

### [शब्दनिरूपणम्]

गुणत्वे सति श्रोत्रग्राह्यः शब्दः।

।इति गुणपदार्थः।

### [कर्मपदार्थनिरूपणम्]

संयोगासमवेतसंयोगासमवायिसमवेतवत् कर्म। तच्च पञ्चविधम्। उत्क्षेपणादिभेदेन।

## [उत्क्षेपणनिरूपणम्]

तत्राधोदेशविभागोर्ध्वदेशसंयोगजनकं कर्म उत्क्षेपणम्।

## [अपक्षेपणनिरूपणम्]

ऊर्ध्वदेशविभागाधोदेशसंयोगजनकं कर्मापक्षेपणम्।

## [आकुञ्चननिरूपणम्]

अग्रदेशविभागमूलदेशसंयोगजनकं कर्माकुञ्चनम्।

## [प्रसारणनिरूपणम्]

मूलदेशविभागाग्रदेशसंयोगजनकं कर्म प्रसारणम्।

## [गमननिरूपणम्]

उत्क्षेपणाकुञ्चनं च प्रयत्नजनिष्ठम्। न च गमनस्यापि प्रसङ्गाद् अप्रयत्नजं कर्म गमनम्। ननु पञ्चैव कर्माणीति नोपपद्यते भ्रमणादीनां सत्त्वादिति चेन्न भ्रमणादयोऽपि कर्मविशेषा इत्युक्तं शास्त्रकृद्भिः।

## [सामान्यपदार्थनिरूपणम्]

समवेतत्वरहितसर्वान्योन्याभावसमानाधिकरणसमवेतं सामान्यम्।

## [विशेषपदार्थनिरूपणम्]

समवेतत्वरहितसर्वान्योन्याभावसमानाधिकरणरहिताः समवेतरहितसमवेता विशेषाः।

## [समवायपदार्थनिरूपणम्]

नित्यः सम्बन्धः समवायः।

## [अभावपदार्थनिरूपणम्]

समवेतत्वरहितसर्वान्योन्याभावसमानाधिकरणाभावो वा।

नञर्थविषयप्रत्ययविशेषोऽभावः। स च चतुर्धा भिद्यते। प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावः चेति।

## [प्रागभावनिरूपणम्]

उत्तरैकावधिरभावः प्रागभावः।

**[प्रध्वंसाभावनिरूपणम्]**

पूर्वैकावधिरभावः प्रध्वंसाभावः।

**[अन्योन्याभावनिरूपणम्]**

तादात्म्यप्रतियोगिकोऽभावोऽन्योन्याभावः।

**[अत्यन्ताभावनिरूपणम्]**

उभयावधिरहितसंसर्गाभावोऽत्यन्ताभावः।

**तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्ततः।**
**वर्षेषूदयनः चक्रे सुबोधां लक्षणावलीम्।**
**विद्यासन्ध्योदयोद्रेकादविद्यारजनीक्षये।**
**यदुदेति नमः तस्मै कस्मैचिद्विश्वतस्त्विषे।**

**॥इति श्रीमदुदयनाचार्यविरचिता लक्षणावली समाप्ता॥**

(२)

परिशिष्टं द्वितीयम्

(ब)

# लक्षणावलीगतानां लक्षणानां वर्णानुक्रमेण सूचिः

| लक्ष्यम् | लक्षणम् | परिच्छेदः |
|---|---|---|
| अतीन्द्रियत्वम् | अज्ञातसाधनत्वम्। | ३ |
| अत्यन्ताभावः | उभयावधिरहितसंसर्गाभावः। | ४८ |
| अधर्मः | निषिद्धक्रियया साध्यः पुङ्गुणः। | ३३ |
| अन्योन्याभावः | तादात्म्यप्रतियोगिकोऽभावः। | ४७ |
| अपक्षेपणम् | ऊर्ध्वदेशविभागाधोदेशसंयोगजनकं कर्म। | ३७ |
| अपरत्वम् | विशेषणतयापरप्रत्ययनिमित्तम्। | २२ |
| अपरोक्षत्वम् | ज्ञानकरणजन्यत्वरहितज्ञानत्वम्। | ३ |
| अभावः | समवेतत्वरहितसर्वान्योन्याभावसमानाधिकरणः, नञर्थविषयप्रत्ययविशेषः। | ४४ |
| आकाशः | शब्दात्यन्ताभावानधिकरणम्,<br>संयोगजन्यजन्यविशेषगुणसमानाधिकरणविशेषाधिकरणम्। | ७ |
| आकुञ्चनम् | अग्रदेशविभागमूलदेशसंयोगजनकं कर्म। | ३८ |
| आत्मा | ज्ञानात्यन्ताभावरहितः,<br>परत्वासमवायिसमवायित्वरहितशब्दासमानाधिकरणकार्याश्रयः। | १० |
| इच्छा | प्रार्थना। | २६ |
| इन्द्रियम् | शरीरसंयुक्तम् अपरोक्षप्रतीतिसाधनम् अतीन्द्रियम्। | ३ |
| उत्क्षेपणम् | तत्राधोदेशविभागोर्ध्वदेशसंयोगजनकं कर्म। | ३६ |
| करणम् | कर्तृप्रेर्यम्। | ५ |
| कर्म | संयोगासमवेतसंयोगासमवायिसमवेतवत्। | ३५ |
| कालः | अनियतपरत्वासमवायिसमवायित्वरहितपरत्वासमवायिसमवायिमूर्तत्वरहितः। | ८ |
| क्रिया | धातुवाच्या। | ५ |
| गन्धः | गुणत्वे सति घ्राणग्राह्यः। | १५ |

| | | |
|---|---|---|
| गमनम् | अप्रयत्नजं कर्म। | ४० |
| गुणः | संयोगाजन्यसंयोगासमवायिसमवेतत्वरहितसंयोगासंयोगसमवेतवान्, विभागाजन्यविभागासमवायिसमवेतत्वरहितविभागाविभागसमवेतवान्। | १२ |
| गुरुत्वम् | आद्यपतनासमवायिकारणम्। | २९ |
| जलम् | पृथिवीवृत्तित्वरहितहिमकरकावृत्तिजातिमत्। | ४ |
| तेजः | रसात्यन्ताभावसमानाधिकरणरूपाधिकरणम्, करकावृत्तित्वरहितविद्युदाकरजवृत्तिजातिमद्। | ५ |
| विद्युत् | करकावृत्तित्वरहिताकरजवृत्तिजातिमती। | ५ |
| दिक् | अनियतपरत्वासमवायिसमवायिनी मूर्तत्वरहिता। | ९ |
| दुःखम् | यस्मिन् सत्यनुद्वेषः। | २५ |
| द्रवत्वम् | आद्यस्यन्दनासमवायिकारणम्। | ३० |
| द्रव्यम् | गुणात्यन्ताभावानधिकरणम्, मूर्तत्वरहितसमवेतसमवेतत्वरहितमूर्तत्वरहितामूर्तत्वरहितसमवेतजातिमद्, गन्धासमवेतगगनारविन्दसमवेतजातिमद्, समवेतसमवेतसमवेतम्। | २ |
| द्वेषः | ज्वलनात्मकः। | २७ |
| धर्मः | विहितक्रियया साध्यः पुङ्गुणः। | ३३ |
| पदार्थः | अभिधेयः। | १ |
| परत्वम् | विशेषणतया परप्रत्ययनिमित्तम्। | २२ |
| परिमाणम् | सङ्ख्यासमवेतत्वरहितसङ्ख्यासमवायिकारणसमवेतवत्। | १८ |
| पृथक्त्वम् | शब्दासमवायिकारणसमवेतत्वरहितसर्वान्योन्याभावसमानाधिकरण-समवेतपरिमाणासमवायिसमवेतत्वरहिताधिकरणम्। | १९ |
| पृथिवी | गन्धात्यन्ताभावरहिता, करकासमवेतवाजिविषाणसमवेतजातिमती। | ३ |
| प्रध्वंसः | पूर्वैकावधिरभावः। | ४६ |
| प्रयत्नः | उत्साहः। | २८ |
| प्रसारणम् | मूलदेशविभागाग्रदेशसंयोगजनकं कर्म। | ३९ |
| प्रागभावः | उत्तरैकावधिरभावः। | ४५ |
| प्राणः | शरीरादिप्रेरणहेतुर्वायुः। | ६ |

| | | |
|---|---|---|
| बुद्धिः | अर्थप्रकाशः। | २३ |
| भावः | नञर्थविषयत्वरहितप्रत्ययविषयः। | १ |
| मनः | स्पर्शरहितत्वे सति मूर्तम्, विशेषगुणात्यन्ताभावाधिकरणत्वे सति मूर्तम्। | ११ |
| रसः | गुणत्वे सति रसनग्राह्यः। | १४ |
| रूपम् | रसासमवेतनीलपीतसमवेतवद्, गुणत्वे सति चक्षुर्मात्रग्राह्यम्। | १३ |
| वायुः | रूपात्यन्ताभावाधिकरणस्पर्शाधिकरणः। | ६ |
| विभागः | संयोगासमवेतसर्वान्योन्याभावसमानाधिकरणसमवेत-शब्दासमवायिसमवेतवान्। | २१ |
| विशेषगुणः | पृथिवीवृत्तिपृथिवीत्वरहितवृत्तिवृत्तित्वरहितगुणत्वव्याप्यजातिमान्। | ११ |
| विशेषाः | समवेतत्वरहितसर्वान्योन्याभावसमानाधिकरणरहिताः समवेतरहितसमवेताः। | ४२ |
| विषयः | प्रतीयमानतया भोगसाधनम्। | ३ |
| विषयवायुः | उपलभ्यमानस्पर्शाधिष्ठानभूतः। | ६ |
| शब्दः | गुणत्वे सति श्रोत्रग्राह्यः। | ३४ |
| शरीरम् | भोगायतनम् अन्त्यावयवि। | ३ |
| संयोगः | विभागासमवेतत्वाभावाविरोधिसमवेतप्रध्वंसप्रतियोगित्वानधिकरण-समवेतत्वानधिकरणगुणत्वसाक्षाद् व्याप्यजात्यधिकरणम्, विभागासमवेतसर्वान्योन्याभावसमानाधिकरणसमवेतशब्दासमवायिसमवेतवान्। | २० |
| संस्कारः | गगनसमवेतसमवेतत्वरहितो मूर्तामूर्तसमवेतसमवेतवान्। | ३२ |
| सङ्ख्या | पृथक्त्वासमवेतसर्वान्योन्याभावसमानाधिकरणैकद्रव्यसमवेतवती। | १७ |
| समवायः | नित्यः सम्बन्धः। | ४३ |
| सामान्यम् | समवेतत्वरहितसर्वान्योन्याभावसमानाधिकरणसमवेतम्। | ४१ |
| सुखम् | यस्मिन् सत्यनुरागः। | २४ |
| स्नेहः | पृथिवीवृत्त्यवृत्तिरससमानाधिकरणवृत्तिशब्दावृत्तिगुणत्वसाक्षाद्व्याप्यजातिमान्, द्रवत्वनिष्ठत्वरहितात्मविशेषगुणनिष्ठत्वरहितपरत्वापरत्वात्यन्ताभावप्रतियोगिसत्ता-वान्तरजातिमदसमवायिकारणम्, द्रवत्वरहितध्वंसान्यत्वविशेषगुणमात्रजनकरहितात्यन्ता-विशेषगुणरहितभावत्वं समवायिकारणम्, सङ्ग्रहादिहेतुः। | ३१ |
| स्पर्शः | गुणत्वे सति त्वगिन्द्रियग्राह्यः। | १६ |

(३)

## तृतीयं परिशिष्टम्।

# आचार्यश्री विजयचन्द्रगुप्तसूरिकृततर्कसङ्ग्रहगतानां लक्षणानां वर्णानुक्रमेण सूचिः

| लक्ष्यम् | लक्षणम् |
|---|---|
| अजहल्लक्षणा | लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयोजिका लक्षणा। |
| अतिदेशः | एकत्र श्रुतस्यान्यत्र सम्बन्धः। |
| अतिव्याप्तिः | लक्ष्यवृत्तित्वे सति अलक्ष्यवृत्तित्वम्, लक्ष्यतावच्छेदकव्यापकत्वे सति लक्ष्य तावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यम्। |
| अत्यन्ताभावः | त्रैकालिकत्वे सति संसर्गावच्छिन्नप्रतियोगिताकाभावत्वम्, तादात्म्यभिन्नसम् बन्धावच्छिन्नप्रतियोगिताकाभावत्वम्। |
| अधर्मः | वेदनिषिद्धकर्मजन्यो गुणः। |
| अनित्यत्वम् | ध्वंसप्रागभावान्यतरप्रतियोगित्वम्। |
| अनुपसंहारी अनैकान्तिकः | अन्वयव्यतिरेकदृष्टान्तरहितो हेतुः। |
| अनुभवः | स्मृतित्वावच्छिन्नप्रतियोगिताकभेदवत्त्वे सति ज्ञानत्वम्। |
| अनुमानम् | अनुमितिकरणम्। |
| अन्यतमत्वम् | तद्भिन्नत्वे सति तद्भिन्नत्वे सति तद्भिन्नं यत् तदन्यत्वम्, भेदकूटावच्छिन्नप्रति योगिताकभेदवत्त्वम्। |
| अन्यतरत्वम् | तद्भिन्नत्वे सति तद्भिन्नं यत् तदन्यत्वम्, भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त् वमन्यतरत्वम्। |
| अन्यथासिद्धिः | अवश्यक्लृप्तनियतपूर्ववर्तिनैव कार्यसम्भवे तत्सहभूतत्वम्। |
| अन्योन्याभावः | तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम्। |
| अन्वयव्यतिरेकी | अन्वयेन व्यतिरेकेण च व्याप्तिमान्। |
| अपक्षेपणम् | अधोदेशसंयोगहेतुः। |
| अपरत्वम् | अल्पदेशवृत्तित्वम्। |
| अपरत्वम् | अपरव्यवहारासाधारणकारणम्। |

| | |
|---|---|
| अनुमितिः | परामर्शजन्यत्वे सति हेत्वविषयकज्ञानत्वम्। |
| अयथार्थः | तदभाववति तत्प्रकारकोऽनुभवः। |
| अयथार्थानुभवः | तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारतानिरूपकानुभवत्वम्। |
| अयुतसिद्धः | ययोर्द्वयोर्मध्य एकमविनश्यदवस्थमपराश्रितमवतिष्ठते। |
| अवच्छेदकः | अन्यूनानतिप्रसक्तो धर्मः। गौणसमनियतधर्मः। |
| अवयवत्वम् | प्रतिज्ञाद्यन्यतमत्वम्। |
| अवसरसङ्गतित्वम् | प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्यनन्तरमवश्यवक्तव्यत्वम्। |
| अव्याप्तिः | लक्ष्यैकदेशावृत्तित्वम्, लक्ष्यतावच्छेदकसामानाधिकरण्ये सति लक्ष्यतावच्छेद कसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्। |
| असमवायिकारणम् | कार्येण स्वकार्यसमवायिकारणेन वा सहैकस्मिन्नर्थे समवेतं सत् यत्कारणम्, समवायसम्बन्धावच्छिन्नकार्यतानिरूपितसमवाय-स्वसमवायिसमवेतत् वान्यतरसम्बन्धावच्छिन्नकारणताश्रयत्वे सत्यात्मविशेषगुणभिन्नत्वम्, आत्मविशेषगुणभिन्नत्वे सति समवायस्वसमवायिसमवायित्वान्यतरसम्बन्धा वच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणताश्रयत्वम्। |
| असम्भवः | लक्ष्यमात्रावृत्तित्वम्। लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम्। |
| असाधारणकारणम् | कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वम्। |
| असाधारणानैकान्तिकलक्षणम् | सर्वसपक्षविपक्षव्यावृत्तः, केवलव्यतिरेकिभिन्नत्वविशिष्टः पक्षमात्रवृत्तिः। |
| आकाङ्क्षा | पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वम्, अव्यवहितोत्तरत्वादिसम्बन्धेन यत्पदे यत्पदप्रकारकज्ञान-व्यतिरेकप्रयुक्तो यादृशशाब्दबोधाऽभावः तादृशशाब्दबोधे तत्पदे तत्पदवत्त्वम्। |
| आकाशः | समवायेन शब्दाश्रयत्वम्। |
| आकुञ्चनम् | शरीरस्य सन्निकृष्टसंयोगहेतुः। |
| आत्मा | ज्ञानाधिकरणम्। |
| आपः | शीतस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम्। |
| आप्तलक्षणम् | प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम्। |
| आरोपः | बाधकालीनेच्छाजन्यं ज्ञानम्। |
| आश्रयासिद्धहेत्वाभासः | पक्षतावच्छेदकाभाववत्पक्षकत्वम्। |
| इच्छा | इच्छात्वजातिमत्त्वम्। |

| | |
|---|---|
| उत्क्षेपणम् | ऊर्ध्वदेशसंयोगहेतुः। |
| उदाहरणवाक्यम् | व्याप्तिप्रतिपादकदृष्टान्तवचनम्। |
| उद्देशः | नाममात्रेण वस्तुसङ्कीर्तनम्। |
| उपनयवाक्यम् | उदाहृतव्याप्तिविशिष्टत्वेन हेतोः पक्षधर्मताप्रतिपादकवचनम्। |
| उपमानम् | उपमितिकरणम्। |
| उपमितिः | सञ्ज्ञासञ्ज्ञिसम्बन्धज्ञानम्। |
| उपाधिः | साध्यव्यापकत्वे सति साधनाव्यापकत्वम्। |
| करणम् | व्यापारवदसाधारणकारणम्। |
| कर्म | संयोगभिन्नत्वे सति संयोगासमवायिकारणम्। |
| कारणम् | अन्यथासिद्धिशून्यत्वे सति कार्यनियतपूर्ववृत्तित्वम्। |
| कार्यम् | प्रागभावप्रतियोगित्वम्। |
| कालः | विभुत्वे सत्यतीतादिव्यवहारहेतुत्वम्। |
| केवलव्यतिरेकी | व्यतिरेकमात्रव्याप्तिकत्वम्। |
| केवलान्वयी | अन्वयमात्रव्याप्तिकत्वम्, केवलान्वयिसाध्यकत्वम्, स्वविरोधिवृत्तिमदभावाप्रतियोगित्वम्, एकजातीयसम्बन्धेन सर्वत्र विद्यमानत्वमिति नव्याः। |
| गन्धः | घ्राणग्राह्यो गुणः। |
| गमनम् | उत्क्षेपणादिचतुष्टयभिन्नं कर्म। |
| गुणसामान्यम् | द्रव्यकर्मभिन्नत्वे सति सामान्यवत्त्वम्। |
| गुरुत्वम् | आद्यपतनासमवायिकारणम्। |
| गौणीलक्षणा | सादृश्यविशिष्टे लक्षणा। |
| ग्रन्थः | सङ्क्षेपेणोद्देशलक्षणपरीक्षा यस्मिन्। |
| चेष्टा | हिताहितप्राप्तिपरिहारानुकूलक्रिया। |
| जहदजहल्लक्षणा | शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्रबोधप्रयोजिका लक्षणा। |
| जहल्लक्षणा | लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका लक्षणा। |
| जीवः | सुखादिसमवायिकारणत्वम्। |
| जीवनयोनिः | जीवनादृष्टजन्यो गुणः। |
| तर्कः | तर्क्यन्ते=प्रमितिविषयीक्रियन्ते इति तर्काः। व्याप्यारोपेण व्यापकारोपः। |

| | |
|---|---|
| तेजः | उष्णस्पर्शवत्। उष्णस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम्। |
| दिशः | विभुत्वे सति प्राच्यादिव्यवहारहेतुत्वम्। |
| दुःखम् | सर्वेषां प्रतिकूलवेदनीयम्, इतरद्वेषानधीनद्वेषविषयत्वम्। |
| दोषसामान्यम् | यद्विषयकत्वेन ज्ञानस्यानुमितितत्करणान्यतरप्रतिबन्धकत्वं तत्त्वम्। अनुमितितत्करणान्यतरनिष्ठप्रतिबध्यतानिरूपितज्ञाननिष्ठप्रतिबन्धकता यद्विषयकत्वावच्छिन्ना तत्त्वम्। |
| द्रव्यत्वम् | गुणवत्त्वम्, क्रियाश्रयत्वम्। |
| द्रव्यसामान्यम् | द्रव्यत्वजातिमत्त्वम्, गुणवत्त्वम्, समवायिकारणत्वम्। |
| द्वेषः | द्वेषत्वजातिमत्त्वम्, द्विष्टसाधनताज्ञानजन्यगुणत्वम्। |
| धर्मः | वेदविहितकर्मजन्यो गुणः। |
| निगमनवाक्यम् | पक्षे साध्यस्याबाधितत्वप्रतिपादकवचनम्। |
| नित्यत्वम् | ध्वंसभिन्नत्वे सति ध्वंसाप्रतियोगित्वम्। |
| निमित्तकारणम् | समवायिकारणभिन्नत्वे सत्यसमवायिकारणभिन्नत्वविशिष्टकारणत्वम्। |
| निर्विकल्पकज्ञानम् | निष्प्रकारकं ज्ञानम्, प्रकारतादिविषयतात्रयशून्यत्वे सति ज्ञानत्वम्। |
| निवृत्तिः | द्वेषजन्यो गुणः। |
| न्यायत्वम् | प्रतिज्ञाद्यवयवपञ्चकसमुदायत्वम्। |
| पक्षः | सन्दिग्धसाध्यवान्, अनुमित्युद्देश्यत्वम्। |
| पक्षधर्मता | व्याप्यस्य पर्वतादिवृत्तित्वम्। |
| पदम् | निरूपकतासम्बन्धेन शक्तिविशिष्टम्। |
| परत्वम् | अधिकदेशवृत्तित्वम्। |
| परत्वम् | परव्यवहारासाधारणकारणम्। |
| परमात्मा | नित्यज्ञानवान्। |
| परामर्शः | व्याप्तिविशिष्टपक्षधर्मताज्ञानम्, पक्षनिष्ठविशेष्यतानिरूपितहेतुनिष्ठप्रकारतानिरूपितव्याप्तिनिष्ठप्रकारतानिरूपकं ज्ञानम्। |
| परार्थानुमानम् | न्यायप्रयोज्यानुमानम्। |
| परिमाणम् | मानव्यवहारासाधारणकारणम्। |
| परीक्षा | लक्षितस्य लक्षणं सम्भवति न वेति विचारः। |

| | |
|---|---|
| पाकः | विजातीयतेजःसंयोगः। |
| पृथक्त्वम् | पृथग्व्यवहारासाधारणकारणम्। |
| पृथ्वी | गन्धवत्त्वम्, गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम्, गन्धत्वावच्छिन्नसमवायसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपितद्रव्यत्वव्याप्यजातित्वावच्छिन्नसमवायसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयत्वम्। |
| प्रतिज्ञावाक्यम् | साध्यविशिष्टपक्षबोधकवचनम्। |
| प्रतिबन्धकत्वम् | प्रकृतकार्यानुकूलकारणविघटकत्वम्, कारणीभूताभावप्रतियोगित्वम्। |
| प्रतियोगी | यस्याभावः सः। |
| प्रत्यक्षम् | प्रत्यक्षज्ञानकरणम्, इन्द्रियार्थसन्निकर्षजन्यं ज्ञानम्, ज्ञानाकरणकं ज्ञानम्। |
| प्रत्यभिज्ञा | पुरोवर्तिनि पूर्वदृष्टस्याभेदावगाहिज्ञानम्। |
| प्रध्वंसः | सादिरनन्तोऽभावः। |
| प्रमा | तद्वति तत्प्रकारकोऽनुभवः। |
| प्रमाणम् | प्रमाकरणत्वम्। |
| प्रयत्नः | प्रयत्नत्वजातिमान्। |
| प्रवृत्तिः | इच्छाजन्यो गुणः। |
| प्रसारणम् | शरीरस्य विप्रकृष्टसंयोगहेतुः। |
| प्रागभावः | अनादिः सान्तोऽभावः। |
| बाधितहेत्वाभासः | यस्य साध्याभावः प्रमाणान्तरेण निश्चितः, यस्य हेतोः साध्यरूपो विषयः पक्षे बाधितः। |
| बालः | अधीतव्याकरणकाव्यकोशोऽनधीतन्यायशास्त्रः। |
| बुद्धिः | सर्वव्यवहारहेतुर्गुणः। |
| भावना | अनुभवजन्यत्वे सति स्मृतिहेतुत्वम्, अनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वे सति स्मृतिहेतुत्वम्। |
| भूतत्वम् | बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्। |
| मनः | सुखदुःखादिसाक्षात्कारकारणत्वे सतीन्द्रियत्वम्। |
| मूर्तत्वम् | क्रियाश्रयत्वम्। |
| मोक्षः | स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसः। |

| | |
|---|---|
| यथार्थानुभवः | तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वे सत्यनुभवत्वम्। |
| योग्यता | अर्थाबाधः। |
| रसः | रसनग्राह्यो गुणः। |
| रूपम् | चक्षुर्मात्रग्राह्यो गुणः, चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुर्जन्यप्रत्यक्षविषयत्वे सति विशेषगुणत्वम्, चक्षुर्मात्रग्राह्यजातिमद्गुणत्वम्। |
| लक्षणम् | असाधारणधर्मः, अव्याप्त्यतिव्याप्त्यसम्भवरूपदोषत्रयशून्यम्। |
| लक्षणा | शक्यसम्बन्धः। |
| लक्ष्यत्वम् | लक्षणाज्ञानजन्योपस्थितीयविशेष्यताश्रयत्वम्। |
| वाक्यम् | पदसमूहः। |
| वायुः | रूपरहितत्वे सति स्पर्शवत्त्वम्, समवायसम्बन्धावच्छिन्नरूपत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपितसमवायसम्बन्धावच्छिन्नस्पर्शत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपितसमवायसम्बन्धावच्छिन्नद्रव्यत्वव्याप्यजातित्वावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयत्वम्। |
| विपक्षः | निश्चितसाध्याभाववान्। |
| विपर्ययः | मिथ्याज्ञानम्। |
| विभागः | स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्धयावद्धर्मविशिष्टधर्मिणां प्रतिपादनम्। |
| विभागः | संयोगनाशकत्वविशिष्टगुणत्वम्। |
| विभुत्वम् | सर्वमूर्तद्रव्यसंयोगित्वम्। |
| विरुद्धहेत्वाभासः | सत्प्रतिपक्षभिन्नत्वविशिष्टसाध्याभावव्याप्तो हेतुः। |
| विशेषाः | नित्यद्रव्यवृत्तयो व्यावर्तकाः। |
| विषयः | शरीरेन्द्रियभिन्नत्वे सत्युपभोगसाधनम्। |
| वेगः | द्वितीयादिपतनासमवायिकारणम्। |
| व्यतिरेकव्याप्तिः | साध्याभावव्यापकीभूताभावप्रतियोगित्वम्। |
| व्यापकत्वम् | अधिकदेशवृत्तित्वम्, स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्। |

| | |
|---|---|
| व्यापारः | द्रव्यान्यत्वे सति तज्जन्यत्वे सति तज्जन्यजनकत्वम्। |
| व्याप्तिः | हेतुव्यापकसाध्यसामानाधिकरण्यम्, साध्याभावाधिकरणनिरूपितवृत्तित्वाभावः, साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतावद्भिन्नाधिकरणवृत्त्यभावत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तितात्वावच्छिन्नप्रतियोगिताकाभावः। |
| व्याप्यः | व्याप्त्याश्रयः। |
| व्याप्यत्वासिद्धहेत्वाभासः | सोपाधिको हेतुः। |
| शक्तिः | अस्मात् पदादयमर्थो बोधव्य इतीश्वरसङ्केतः, घटादिविशेष्यकघटादिपदजन्यबोधविषयत्वप्रकारकेश्वरेच्छा, अर्थस्मृत्यनुकूलपदपदार्थसम्बन्धत्वम्। |
| शक्यत्वम् | शक्तिज्ञानजन्योपस्थितीयविशेष्यताश्रयत्वम्। |
| शब्दः | श्रोत्रेन्द्रियग्राह्यो गुणः, श्रोत्रेन्द्रियग्राह्यजातिमत्त्वम्। |
| शब्दः | आप्तवाक्यम्। |
| शरीरम् | भोगायतनम्, चेष्टाश्रयत्वम्। |
| संयोगः | संयुक्तव्यवहारहेतुः। |
| संशयः | एकस्मिन् धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यावगाहि ज्ञानम्, एकधर्मावच्छिन्नविशेष्यतानिरूपितभावाभावोभयनिष्ठप्रकारतानिरूपकं ज्ञानम्। |
| संस्कारः | सामान्यगुणात्मविशेषगुणोभयवृत्तिगुणत्वव्याप्यजातिमान्। |
| सङ्ख्या | एकत्वादिव्यवहारहेतुः। |
| सत्प्रतिपक्षहेत्वाभासः | साध्याभावसाधकं हेत्वन्तरं यस्य स। |
| सन्निधिः | पदानामविलम्बेनोच्चारणम्। |
| सपक्षः | निश्चितसाध्यवान्। |
| सप्रसङ्गसङ्गतित्वम् | अवश्यनिरूपणीयत्वे सति स्मृतस्योपेक्षानर्हत्वम्। |
| समवायः | नित्यत्वे सति सम्बन्धत्वम्, अयुतसिद्धयोः सम्बन्धः। |
| समवायिकारणम् | यत्समवेतं सत्कार्यमुत्पद्यते, समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणताश्रयत्वम्। |
| समूहालम्बनम् | नानामुख्यविशेष्यताशालिज्ञानम्। |

| | |
|---|---|
| सम्बन्धत्वम् | विशिष्टप्रतीतिनियामकत्वम्। |
| सविकल्पकज्ञानम् | सप्रकारकं ज्ञानम्, प्रकारतादिविषयतात्रयनिरूपकं ज्ञानम्। |
| साधनाव्यापकत्वम् | साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वम्। |
| साधारणकारणम् | कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वम्। |
| साधारणानैकान्तिकम् | पक्षवृत्तित्वे सति सपक्षवृत्तित्वे सति साध्याभाववद्वृत्तित्वम्। |
| साध्यव्यापकत्वम् | साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम्। |
| सामानाधिकरणम् | एकाधिकरणवृत्तित्वम्, तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपिततत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नाधेयतावत्त्वम्। |
| सामान्यम् | नित्यत्वे सत्यनेकसमवेतत्वम्। |
| सुखम् | सर्वेषामनुकूलवेदनीयम्, इतरेच्छानधीनेच्छाविषयत्वम्। |
| स्थितिस्थापकः | अन्यथाकृतस्य पुनः तदवस्थापादको गुणः। |
| स्नेहः | चूर्णादिपिण्डीभावहेतुत्वे सति गुणत्वम्। |
| स्पर्शः | त्वगिन्द्रियमात्रग्राह्यो गुणः। |
| स्मृतिः | संस्कारमात्रजन्यं ज्ञानम्, संस्कारजन्यत्वे सति संस्कारेतरेन्द्रियार्थसन्निकर्षाजन्यत्वविशिष्टज्ञानत्वम्। |
| स्वरूपासिद्धहेत्वाभासः | पक्षे हेतोरभावः। |
| स्वार्थानुमानम् | न्यायाप्रयोज्यानुमानम्। |
| हेतुवाक्यम् | पञ्चम्यन्तं तृतीयान्तं वा लिङ्गवचनम्। |

(४)

# चतुर्थं परिशिष्टम्।

## सन्दर्भग्रन्थसूचिः

**अनु./ ग्रन्थनाम/ कर्ता/ सम्पादक/ प्रकाशक/ वर्ष/ आवृत्ति**

A Primer of Navya Nyaya Language And Methodology/ Ujjwala Jha/ The Asiatic Society/ 2010

Encyclopedia of Indian Philosophies/ Karl H. Potter/ Motilal Banarsidas Publishers Private Limited, Delhi/ 1995/ 3rd

New Catalogus Catalogorum/ Dr. V. Raghavan, Dr. K. Kunjunni Raja/ University of Madras/ 1968

न्यायकोश/ भीमाचार्य झळकीकर/ वासुदेवशास्त्री अभ्यंकर / भाण्डारकरप्राच्यविद्यासंशोधनमन्दिर/ १९९६

न्यायदर्शन, भाष्य-वार्तिक-तात्पर्यटीका-वृत्तिसहित/ श्रीअमरेन्द्रमोहन तर्कतीर्थ तथा श्रीतारानाथ न्यायतर्कतीर्थ/ मुन्शीराम मनोहरलाल प्रकाशन, नवी देहली/ २००३

शारदा लिपि मञ्जूषा/ अनिर्वाण दश/ पद्मजा पब्लिकेशन, इलाहाबाद/ २०१२/ प्रथम/

षड्दर्शनसमुच्चय/ हरिभद्रसूरि/ वैराग्यरतिविजय/ प्रवचन प्रकाशन, पुणे/ प्रथम

(५)

## पञ्चमं परिशिष्टम्।

## लक्षणसङ्ग्रहस्य हस्तप्रतेः चित्राणि

### पत्रम्-१ (ब)



## पत्रम्-८ (ब)



## पत्रम्-९ (अ)



## पत्रम्-१० (अ)



## प्राचीन श्रुतसंपदाना समुद्धार अर्थे
## समुदार सहयोग आपनारा महानुभावोनी नामावली

### श्रुतसमुद्धारक

श्रीमती चंद्रकलाबेन सुंदरलाल शेठ परिवार (मांगरोळ हाल-पुणे)

### श्रुतरत्न

श्री भाईश्री (इंटरनेशनल जैन फाउंडेशन - मुंबई)

### श्रुतसंरक्षक

श्री हसमुखभाई दीपचंदभाई गार्डी (दुबई)

श्री भवानीपुर जैन श्वेतांबर मूर्तिपूजक संघ (कोलकाता)

### श्रुतस्तंभ

पू.सा.श्री हर्षरेखाश्रीजी म.नी प्रेरणाथी श्रीमती वसंतप्रभाबेन कांतिलाल (पुणे)

पू.आ.श्री विश्वकल्याणसू.म.नी प्रेरणाथी श्री पद्ममणि जैन श्वे.मू. ट्रस्ट

पू.आ.श्री राजरत्नसू.म.नी प्रेरणाथी श्री जवाहरनगर श्वेतांबर मूर्तिपूजक जैन संघ (गोरेगाव, मुंबई)

### श्रुतभक्त

श्री शांतिकनक श्रमणोपासक ट्रस्ट (सुरत)

श्री हसमुखलाल चुनिलाल मोदी चॅरिटेबल ट्रस्ट (तारदेव, मुंबई)

श्री पार्श्वनाथ श्वेतांबर मूर्तिपूजक जैन संघ (मुंबई)

श्री ऋषभ अपार्टमेंट महिला मंडल, (प्रार्थना समाजमुंबई)

वर्धमानपुरा जैन संघ, (पुणे)

जैन श्वेतांबर मूर्तिपूजक संघ (दहाणुकरवाडी, कांदीवली, मुंबई)

सुजय गार्डन जैन संघ (पुणे)

## श्रुतप्रेमी

श्री गोडीजी टेम्पल ट्रस्ट (पुणे)

श्री गोडीजी टेम्पल ट्रस्ट (पायधुनी-मुंबई)

श्री रतनचंदजी ताराचंदजी परमार (पुणे)

श्री मोहनलालजी गुलाबचंदजी बांठीया (पुणे)

श्री नगराजजी चंदनमलजी गुंदेचा (पुणे)

श्री नेमीचंदजी कचरमलजी जैन (पुणे)

श्री भरतभाई के. शाह (सुयोग ग्रुप-पुणे)

श्री सोहनलालजी टेकचंदजी गुंदेचा (पुणे)

श्री सुखीमलजी भीमराजजी छाजेड (पुणे)

श्री जैन आशापुरी ग्रुप (पुणे)

श्री महेन्द्र पुनातर (मुंबई)

श्री सुधीरभाई चंदुलाल कापडिया (मुंबई)

श्री संजयभाई महेन्द्रजी पुनातर (मुंबई)

प्रो.श्रीमती विमल बाफना (पुणे)

पू.सा.श्री नंदीयशाश्रीजी म.नी प्रेरणाथी श्री आंबावाडी जैन संघ (अहमदाबाद)

श्री गोवालीया टेंक जैन संघ (मुंबई)

श्री मोतीशा लालबाग रिलीजीयस चेरिटेबल ट्रस्ट (भायखला, मुंबई)

पू.आ.श्री तीर्थभद्रसू.म.नी प्रेरणाथी

जे. सी. कोठारी देरासर जैन श्वेतांबर मूर्तिपूजक संघ (मलाड, मुंबई)

श्री अशोक कालिदास कोटेचा (अमदावाद)

श्री विमलनाथस्वामी जैन श्वेतांबर मूर्तिपूजक जैन संघ (बिबवेवाडी, पुणे)

श्री मुनिसुव्रतस्वामी श्वेतांबर मूर्तिपूजक जैन संघ (लेकटाउन सो., पुणे)

श्री श्वेतांबर मूर्तिपूजक जैन संघ (सोलापुर बजार,पुणे)

श्री जैन श्वेतांबर मुर्तिपूजक गुजराती पंच (मालेगांव, नाशिक)

सायन जैन संघ (मुंबई)

## श्रुतोपासक

श्री अर्थप्राईड जैन संघ (मुंबई)

पू.आ.श्री कलाप्रभसागरसू.म.नी प्रेरणाथी श्री मुलुंड श्वेतांबर मूर्तिपूजक जैन संघ (मुंबई)

पू.मु.श्री जिनरत्नवि.म.नी प्रेरणाथी श्री आदिनाथ सोसायटी जैन संघ (पुणे)

पू.सा.श्री सूर्यमालाश्रीजी म.नी प्रेरणाथी श्री सम्यक् साधना रत्नत्रय आराधक ट्रस्ट (अमदावाद)

पू. उपा. श्री जितेंद्रमुनिजी म.नी प्रेरणाथी श्रीमती सीमा जैन (होशियारपुर, पंजाब)

श्री वर्धमानस्वामी जैन चेरिटेबल ट्रस्ट (सदाशिव पेठ, पुणे)

पू.आ.श्री तीर्थभद्रसू.म.नी प्रेरणाथी मातुश्री कमळाबेन गिरधरलाल वोरा परिवार (खाखरेची-मुंबई) आयोजित उपधान तप समिति

पू.आ.श्री तीर्थभद्रसू.म.नी प्रेरणाथी मातुश्री मानुबेन माडण गुणसी गडा परिवार

(थोरीयारी- मुंबई) आयोजित उपधान तप समिति

## श्रुतानुरागी

श्री मुनिसुव्रतस्वामी श्वेतांबर मूर्तिपूजक जैन संघ (फातिमानगर, पुणे)

श्री जैन आत्मानंद सभा (फरिदाबाद-पंजाब)

पू.मु.श्री जिनरत्नवि.म.नी प्रेरणाथी श्रीजिनरत्न आनंद ट्रस्ट

गोत्रीरोड श्वेतांबर मूर्तिपूजक जैन संघ (वडोदरा)

श्री श्वेतांबर मूर्तिपूजक जैन संघ (गोरेगाव, मुंबई)

श्री मुनिसुव्रतस्वामी जिनालय (मलाड, मुंबई)

# प्रकाशित ग्रंथरत्न एवं सौजन्यदाता

१. **मन:स्थिरीकरणप्रकरण**
(श्री पंचमहाजन मेरमांडवाडा, राज.)

२. **दार्शनिक प्रकरण संग्रह**
(ला.द.संस्कृति विद्यामंदिर, अमदावाद)

३. **स्याद्वादपुष्पकलिका**
(श्री मर्चंट सोसायटी जैन संघ, अमदावाद)

४. **भवभावना अवचूरि**
(श्री रंजनविजयजी जैन पुस्तकालय, मालवाडा, राज.)

५. **प्रशमरति प्रकरण**
(तपागच्छ रत्नत्रयी आराधक संघ, सुरत)

६. **मुक्तिवाद**
(तपागच्छ रत्नत्रयी आराधक संघ, सुरत)

७. **कल्पनिर्युक्ति**
(चंपालाल दानसुंग अजबाणी आयोजित चातुर्मास समिति)

८. **व्याप्तिपंचक**
(जूहुस्कीम जैन संघ + आकोला जैन संघ)

९. **सर्वसिद्धांतस्तव**
(रत्नशिला अपार्टमेंट, वापी)

१०. **प्राकृत व्याकरण**
(श्री आदेश्वर महाराज मंदिर ट्रस्ट, गोटीवाला धडा, पुणे)

११. **अर्धमागधी व्याकरण**
(श्री आदेश्वर महाराज मंदिर ट्रस्ट, गोटीवाला धडा, पुणे)

१२. **योगकल्पलता**
(श्री विमलनाथस्वामी जैन श्वेतांबर टेम्पल ट्रस्ट, बिबवेवाडी, पुणे)

१३. **बुद्धिसागर**
(श्री माटुंगा जैन श्वेतांबर मूर्तिपूजक तपगच्छ संघ, माटुंगा, मुंबई)

१४. **कल्पसूत्र (भाष्य-विशेषचूर्णिसहित) भाग-१**
(श्री पार्श्वभक्ति श्वेतांबर मूर्तिपूजक जैन संघ, पांडुरंगवाडी, डोंबीवली (ई), ठाणे)

१५. **कल्पसूत्र (भाष्य-विशेषचूर्णिसहित) भाग-२**
(श्री राजेश गोसलिया परिवार, मांगरोळ, सौराष्ट्र, हाल-दुबई)

१६. **कल्पसूत्र (भाष्य-विशेषचूर्णिसहित) भाग-३**
(श्री आदिनाथ श्वेतांबर मूर्तिपूजक जैन संघ, कानजीवाडी, नवसारी)

१७. **नयामृतम्-२**
(तपोवन संस्कार पीठ, अमदावाद) (तपोवन संस्कार धाम, नवसारी)

१८. **श्रुतदीप-१**
(श्री घाटकोपर जैन श्वेतांबर मूर्तिपूजक तपगच्छ संघ, घाटकोपर, मुंबई)

१९. **स्तोत्रसंग्रह**
(श्री घाटकोपर जैन श्वेतांबर मूर्तिपूजक तपगच्छ संघ, घाटकोपर, मुंबई)

२०. **मंडलविचारप्रकरण**
(श्री चिंतामणी पार्श्वनाथ जैन श्वेतांबर मंदिर तथा मूर्तिपूजक संघ, नाशिक)

२१. **अष्टाह्निकाधुराख्यान सह अनुवाद**
(श्री चिंतामणी पार्श्वनाथ जैन श्वेतांबर मंदिर तथा मूर्तिपूजक संघ, नाशिक)

२२. **आत्मशुद्धिप्रकाश**
(श्री चिंतामणी पार्श्वनाथ जैन श्वेतांबर मंदिर तथा मूर्तिपूजक संघ, नाशिक)

२३. **धर्मबिन्दु पञ्चमाध्याय सङ्गतिवृत्ति सह**
(श्री शंखेश्वर पार्श्वनाथ आराधक संघ, पुखराज रायचंद आराधना भवन, साबरमती)

२४. **लक्षणसंग्रह**
(श्री जैन श्वेतांबर मूर्तिपूजक तपगच्छ संघ, गोकाक)

